॥ श्रीः ॥

# ॥ श्री शंकराचार्यचरित्रम् ॥





मधुरानगरस्थ
आङ्गलमहाकलाशाला
संस्कृतोपाध्यायेन
को. वै. सुब्रह्मण्यशास्त्रिणा
विरचितम्





मधुरानगरवास्तव्येन
संस्कृतभाषाप्रणयिना
E. M. गोपालकृष्णेन



कुम्भघोणस्थ
श्री कोमलाम्बा मुद्रालये
मुद्रयित्वा प्रकाशितम्



१९२६.

मुद्रणे तथैव कर्तुं सज्जोऽस्मि । प्रत्यासन्ने चावसरे समाप्तसंतुया मधुरावासिभिरभ्यर्थिताः श्रीजगद्गुरवः कामकोटिपीठाधिपतयश्च शेखरेन्द्रसरस्वतीमहास्वामिनः श्रीमीनाक्षीसुन्दरेश्वरालये दुन्दु वत्सरे तुलामासविंशद्दिनादारभ्य वृश्चिकमास विंशदिनपर्यन्तं सदुपन्यासानसन्वन् । तेषु मधुराक्षेत्रवैभव ज्ञानसम्बन्धमहिम लकण्ठदीक्षितचरित्रादिकानुपन्यासानुपन्यासमञ्जरीनाम्ना प्रन्थं द्राविडभाषया संवत्सरद्वयात्पूर्वमेव मुद्रयित्वा प्राकाशयम् । तेषु ज्ञीकृतस्यापि श्रीमदाचार्यचरित्रस्य मुद्रापणे 'श्रेयांसि बहुविघ्नानि' इति न्यायानुसारेण सुलभसाधनालाभेन विलम्बो जातः । इदानीं संस्कृतभाषाप्रणयिना पुस्तकप्रचारणप्रवीणेन E. M. गोपालकृष्ण नेदं मुद्रापितम् । एतच्च श्रीशङ्कराचार्यचरित्रं पाठशालासु पाठनादि पण्डितैरादरणीयम् इति ।

एतद्ग्रन्थपरिशोधनेन महान्तमुपकारं कृतवतां अभिनव बाण श्रीकृष्णमाचार्याणां कृते कृतज्ञतां वहामि । अपरं च त्वरि मुद्रापयित्वाऽतितरामुपकृतवतां श्रीकोमलाम्बायन्त्रालय धुरन्धरा शि. र. श्रीनिवासपाट्टराचार्याणां विषये च धन्यवादान् करोमि ।

इत्थं को. वै. सुब्रह्मण्यः,

गुरुपादुकासेवकः.




स्वस्ति श्रीमदखिलभूमण्डलालङ्कारत्रयस्त्रिंशत्कोटिदेवतासेवित श्रीकामाक्षीदेवीसनाथ श्रीमदेकाम्रनाथ श्रीमहादेवीसनाथ श्रीहस्तिगिरिनाथसाक्षात्कारपरमाधिष्ठान सत्यव्रतनामांकितकाञ्चीदिव्यक्षेत्रे शारदामठसुस्थितानाम् अतुलितसुधारसमाधुर्यकमलासनकामिनीधम्मिल्लसम्फुल्लमल्लिकामालिकानिष्यन्दमकरन्दझरीसौवस्तिकवाङ्निगुम्भविजृम्भणानन्दतुन्दिलितमनीषिमण्डलानाम् अनवरताद्वैतविद्याविनोदरसिकानाम् निरन्तरालंकृतशान्तिदान्तिभूम्नाम् सकलभुवनचक्रप्रतिष्ठापक श्रीचक्रप्रतिष्ठाविख्यातयशोऽलंकृतानाम् निखिलपाषण्डषण्डकण्टकोत्पाटनेन विशदीकृतवेदवेदान्तमार्गषण्मतप्रतिष्ठापकाचार्याणाम् श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीजगद्गुरुश्रीमच्छंकरभगवत्पादाचार्याणाम् अधिष्ठाने सिंहासनाभिषिक्तश्रीमन्महादेवेन्द्रसरस्वतीसंयमीन्द्राणाम् अन्तेवासिवर्य श्रीमच्चन्द्रशेखरेन्द्रसरस्वतीश्रीपादैः ।

अस्मदत्यन्तप्रियशिष्य श्रीपञ्चनदक्षेत्रपरिसरवर्त्यम्माळग्रहारवास्तव्य सुब्रह्मण्यशास्त्रिविषये सर्वाभीष्टसिद्ध्यै क्रियते नारायणस्मृतिः ।

सरळपदपदार्थगाम्भीर्यरमणीयानां विविधधर्मावबोधकानां श्री-मदाचार्यभक्तिरसभरितानां **श्रीशंकरभगवत्पादाचार्यचरित सुनीति-कुसुममालादिग्रन्थानां** मुद्रणेन प्रचारणेन तद्विषयप्रवचनेन च लोकोप-योगिकार्ये बद्धश्रद्धस्य भवतः एतादृशीं प्रवृत्तिमालोक्य नितरां मोमुद्यामहे। अयं च भवदुद्यमस्सर्वत्र सफलस्सर्वैस्समादरणीयस्स्यादित्याशास्महे ॥

मु । पुदुच्चेरी
क्षयसं । मार्गशीर्ष
कृ । ६ ॥ स्थिरवासरे

नारायणस्मृतिः ॥

Mahamahopadhyaya
**T. Venkatasubrahmanya Sastrigal,**
*(Sastra Rathnakara, Mimamsa Ratna etc.)*
*Prinicipal,*
8, 32 The Madras Sanskrit College Street,

MYLAPORE, 25—9—26.

श्री सद्गुरुभ्यो नमः ॥



अवलोकितं चेदं " श्रीशङ्कराचार्यचरित्रम् " ब्रह्मश्री सुब्रह्मण्य शास्त्रिग्रथितम् । तच्च द्वात्रिंशच्चरित्रात्मकं भागद्वयोपेतं सरळपदपदार्थगुम्भितं वाचनसमकालमेव बालानामपि सुखबोधं भासते इति परं प्रमोदस्थानं सहृदयानाम् । श्रीमदाचार्यभक्तिः बालभावादारभ्यैव उपचीयमाना महते श्रेयसे भूयादिति दृढनिश्चयेनानेन पण्डितेनायं ग्रन्थो रचितः इति प्रतिभाति । ग्रन्थोपक्रमे " महितकविवरेण्यव्याहृतिश्लाघ्यभावं " इति पद्येनाविष्क्रियमाणास्य विनीतिः श्रीमदप्पय्यदीक्षितवंशजातस्यास्य युक्तैव । प्रतिचरितं चोपक्रमे निवेश्यमानः कथासंग्राहकः श्लोकः वाचकानां बालकानामितरेषां च उत्तरोत्तरं पठने प्रहर्षं जनयति । आतश्चास्य श्री शङ्कराचार्यचरित्रस्य पाठशालासु पाठनादिना प्रचारणेन पण्डितैरेषा समीचीना प्रवृत्तिः प्रोत्साहनीया इति अस्माभिस्सामोदमावेद्यते ॥

इति

मैलापूर्.

वेंकटसुब्रह्मण्यशास्त्री.

உ

ஓம்:



**Shines illustrious Shri Shankara Bhagavatpada among his disciples Sureswara, Padmapada, Hasta-maḷaka and Thotaka.**

துதிப்போம் பணிவோம் துயர்நீங்கும் கல்வி
நிதிப்பேறு நந்தமக்கு நேரும்—கதிக்குயரும்
நற்சீடர் நால்வருடன் நான்குதிசை யும்விளங்கும்
சற்குருஶ்ரீ சங்கரர்போற் றுள்.

॥ ओं श्रीः ॥

# ॥ श्री शंकराचार्यचरित्रम् ॥

(प्रथमो भागः)

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुःसाक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः ॥१॥

महितकविवरेण्यव्याहृतिश्लाघ्यभावं
निहितसकलसारं गद्यपद्यैरुपेतम् ।
ललितपदनिवेशं शंकराचार्यवर्य-
प्रथितचरितमस्तु श्रेयसे भूयसे नः ॥२॥

प्राचेतसादिकविराजवचःप्रसूना-
मोदाढ्यभाषितसुतैलसमन्वितस्य ।
आचार्यपुंगवकथावलिदीपराशेः
प्रद्योततां कृतिरियं नववर्तिकेव ॥३॥

## १. श्री शंकरावतारः ॥

भक्तिः कामदुघा पुंसः सतीं पत्नीमुपेयुषः ।
सभार्यः शिवमाराध्य लेभे शिवगुरुः सुतम् ॥४॥

अस्ति केरळेषु पण्डितप्रकाण्डैरभिमण्डितः काळटीत्यग्रहारः । तत्र च सदाचारसंपन्नः शिवगुरुरिति विपश्चितामप-

श्चिमः कश्चन भूसुरप्रवरोऽवर्तत । तस्य च भार्या बभूव सती-ललामभूताऽऽर्याबा नाम । सा च कान्तानुवर्तनमेवात्मनः श्रेयस्करं मन्वाना परिचरणादिना सद्गुणगणेन रमणं मोदयामास । तौ च दंपती समेधमानविविधसंपदावपि संतानभाग्यमात्रविहीनौ बभूवतुः । ततो दूयमानमानसौ तौ जायापती महान्तमनेहसमत्यवाहयताम् । 'युक्तमेवेदं यत्सन्तानविहीनैर्दुःखेन समययापनं नाम', यतोऽतनयस्य पुंसो भवनं निरवधिकनिधिसमृद्धमपि शून्यं वनमिव विभाति । यो हि स्तनन्धयवदनारविन्दनिर्गळितामव्यक्तवर्णामपि रमणीयां वाणीं न श्रवणातिथीकरोति स एव वीणावेणुमृदङ्गादिध्वनितं प्रशंसति ॥ उक्तं च—

अपूर्णवर्णमीरितं सुताननाब्जनिःसृतम् ।
अशृण्वता प्रशस्यते विपञ्चिकादिकूजितम् ॥५॥ इति ॥

किञ्च, प्रकाशितदन्तमुकुळानकारणहासानव्यक्तं व्याहरतो धूळिधूसरिताङ्गान्बालकानङ्केनावहतो गृहस्थाननुश्लोकयति श्रीकाळिदासः—

आलक्ष्यदन्तमुकुळाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान्वहन्तो
धन्यास्तदङ्गरजसा मळिनीभवन्ति ॥६॥

इति ॥ एवं सति कर्हिचिद्दिवसेऽतितरां जातखेदामार्यान्स्वामभिवीक्ष्य, धीमाञ्शिवगुरुरेवमाश्वासयामास– अयि मच्छन्दानुवर्तिनि, जन्मान्तरविहितं हि कर्म फलमुपनयति पुरुषस्येह जन्मनि । अथापि यावत्तु मानुष्यके शक्यमुपपादयितुं तत्सर्वं समाचरावः । विशेषतः कुलदैवतमस्माकं वृषाचलेशं समाराधयावः– इति । साचैवं समाश्वासिता भर्तुराशयमभिज्ञाय तथेत्यङ्गीचकार । स चानुकूलया तया समं कालटेः क्रोशदूरस्थितं वृषाचलमासाद्य तत्र कृतनिकेतनः वृषाचलेश्वरं तपसाऽऽराधयामास । एवं गते बहुतिथे काले तपसा तोषितो भगवान्भवानीपतिः कर्हिचिद्दिवसे रजन्यां तुरीये यामे निद्रामास्थितस्य तस्य स्वप्ने पुरतः प्रादुर्भूय एवं व्याजहार— 'भक्तमणे! तव तपश्चर्यया भृशं तुष्टोऽस्मि । दीर्घायुषां मूर्खाणां पुत्राणां शतम्, उताल्पायुषं सर्वज्ञमेकं वात्मजं वृणु–इति। स च चक्षुषी उन्मील्य यावत्पुरतः पश्यति तावदेव शङ्करोप्यन्तरधात् । स चाश्चर्यभरितः पत्न्यै स्वप्नवृत्तमकथयत् । सा चाल्पायुषमपि सर्वज्ञमेकमेव कुमारं भगवाननुगृह्णातु इति पत्ये स्वाशयमाविश्चकार । तदनु तौ शङ्करसन्निधिमागत्य प्रणतिप्रमुखाभिः सपर्याभिः परमेश्वरमाराधयन्तौ स्वाशयानुसन्धानपुरःसरममर्त्यभाषयाऽस्तुवाताम् । तदनुक्षणमेव 'सर्वज्ञोऽहमेव युवयोः पुत्ररूपेणावतरिष्यामि'इति अशरीरिणी गैर्वाणी वाणी विष्णुपदादुदियाय । तां चामृतासारनिकरवर्षिणीं गिरमाकर्ण्य मोदमानमानसौ तौ दंपती कालटीमागत्य तदुच्छिष्टमाश्नीताम् ।

तदनु आपन्नसत्त्वा भगवन्निवासेन कमनीयां कान्तिमापन्ना सा पत्युरमन्दमानन्दं जनयामास । सोऽप्यन्तर्वत्नीं पत्नीमपेक्षित-प्रदानेनातोषयत् । अथ सा दशमे मासि त्रिलोकीगुरुं कुमारं सुषुवे । (कलौ अनलशेवधिबाणनेत्रे 2593 क्रि. पू. नन्दखपाण्डवे 509) नन्दनसंवत्सरे वैशाखमासि पञ्चमीतिथौ पुनर्वसुनक्षत्रे अभिजिन्मुहूर्ते भगवानेव शङ्करः त्रिलोकीपुण्यपरिपाकेण पुत्ररूपेणाविर्बभूव ॥

---

## २. शिवगुरोः स्वर्गप्राप्तिः ॥

महानपि न शक्नोति दैवं स्वमतिलंघितुम् ।
ययौ शिवगुरुः स्वर्गमपश्यन्पुत्रवैभवम् ॥७॥

अथावतरति भगवति शङ्करे नद्यः प्रसन्नसलिला बभूवुः । वायुः सुखस्पर्शो ववौ । वैदिकानां मनांसि प्रसेदुः । वेदबाह्यानां हृदयान्यकम्पन्त । तदा धर्मशास्त्रपारावारपारङ्गतः शिवगुरुः समासन्नायां चूर्णीसरिति यथाविधि स्नात्वा जातकर्म चकार । द्वादशेऽहनि ज्योतिस्तन्त्रप्रवीणैः 'जातोऽयं कुमारः सर्वज्ञः स्वतन्त्रं शास्त्रमाकलय्य विदुषो जेष्यति' इति प्रशंसितस्तस्य शङ्कर इति नामाकरोत् । उक्तं च—

प । सत्कारपूर्वमभियुक्तमुहूर्तवेदि-
विप्राः शशंसुरभिवीक्ष्य सुतस्य जन्म ।

सर्वज्ञएव भविता रचयिष्यते च
शास्त्रं स्वतन्त्रमथ वागधिपांश्च जेता ॥८॥
यत्पश्यतां शिशुरसौ कुरुते शमग्र्यं
तेनाकृतास्य जनकः किल शङ्कराख्याम् ।
यद्वा चिराय किल शङ्करसम्प्रसादा-
ज्जातस्ततो व्यधित शङ्करनामधेयम् ॥९॥ इत्यादिना।

बालोऽपि शुक्लपक्षचन्द्रमा इव पित्रोरानन्देन समं प्रतिदिनं समैधत । जातस्य तस्यानतीतेऽपि संवत्सरत्रितये सर्वासु भाषास्वप्यसाधारणी नैपुणी स्वयमेव प्रतिभाति स्म । पञ्चमे च हायने स बालो निगमान्विना शास्त्रान्तराण्यनायासेन विदाञ्चकार । आम्नायाः परमुपनयनकालसीमानमसहमानाः स्वयमेव तमासेवितुमवसरं प्रतीक्षमाणा आसन् । अत्रान्तरे शिवगुरुः शिवसायुज्यमगात् ! 'हन्त हन्त शरीरस्यानित्यता' यतः–

प । पुरादिनास्थितोऽधुना दिनेऽपि सम्भवेदिति ।
अनिश्चयस्वभाववान्मनुष्यलोक एव हि ॥१०॥

अहो! बालापत्योऽपि शिवगुरुः पुत्रवदनारविन्दान्निरर्गळनिर्गळितां वाणीमकरन्दधारां पूर्णतयास्वादितुमभाग्योदयेन परलोकमगात् । 'अहो कालस्य कुटिला गतिः' । 'कृतान्तः प्राणिनां कृताकृतं न प्रतीक्षते' । किञ्च—

प । मृत्युर्जन्मवतां वीर देहेन सह जायते ।
अद्य वाब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः ॥११॥ इति च

पुराणस्मृतिरवितथा भवति । अथवा समुचितमेव तस्य सत्वरं लोकान्तरगमनम्, यतः सर्वानपि संसारादुत्तारयिष्यतः शङ्करस्यापि गुरुभावमापन्नस्य शिवगुरोरनित्यं भवमुज्झित्वा नित्यभवोपलम्भो भवतीति ॥

## ३. उपनयनम् ॥

शक्तस्योपनयः शास्त्रसम्मतो वर्षपञ्चके ।
उपनिन्युः पञ्चमेऽब्दे शङ्करं बान्धवा मुदा ॥१२॥

अथ दिवं गते प्राणकान्ते तदनुगमनमभिकांक्षन्तीं सतीशिरोमणिमार्याम्बां बांधवा न्यषेधन् । ततस्तन्निषेधवशंवदा सा सुकुमारकुमारवदनारविन्दसन्दर्शनेन किञ्चिदिव जातसमाश्वासा पुरुषस्यौर्ध्वदैहिकं कर्म सर्वमपि निरवर्तयत् । पञ्चमे च हायने बन्धुभिरस्योपनयनमकारयत् ॥ उक्तं च-

प । उपनयं किल पञ्चमवत्सरे प्रवरयोगयुते सुमुहूर्तके ।
द्विजवधूर्नियता जननी शिशोर्व्यधित तुष्टमनाः सह बन्धुभिः॥

इति । यः सर्वविद्यानामीष्टे । यं मुक्तिकामाः समाश्रयन्ति। येन सकलमिदं जगत् मूर्तिभेदमादाय सृज्यते रक्ष्यते नाश्यते च । यस्मै च स्पृहयति ब्रह्मविद्या । यस्माच्च जगत्क्षेमपरम्परा प्रभवति । यस्य च निश्वसितं वेदाः । यस्मिन्साधनचतुष्टयवन्तोऽन्ते वसन्ति । तस्यापि निगमाध्ययनमावश्यकं वा? नैव। अथापि लोकसंग्रहाय शास्त्रोक्तनियमनिरत एव गुरुकुल-

मासाश्च साङ्गोपाङ्गांश्चतुरो वेदानध्यैत । जनसमूहस्तु वयसा बालमपि ज्ञानेन स्थविरं तमालक्ष्य विस्मितोऽभवत् ॥ उक्तं च

प । अधिजगे निगमांश्चतुरोऽपि स
क्रमत एव गुरोः स षडङ्गकान् ।
अजनि विस्मितमत्र महामतौ
द्विजसुतेऽल्पतनौ जनतामनः ॥१४॥ इति

अधीतनिगमोऽपि विनाहङ्कारं महत्सु भक्तिं समस्तेष्वपि जनेषु सांत्ववचनं च प्रदर्शयन्दिक्षु विदिक्षु च प्रथां प्रपेदे । भक्तिः सान्त्ववचनं च विदुषां विशेषेण विभूषणं भवति ।

उक्तं च सुनीतिकुसुममालायाम्—

प । महत्सु भक्तिशालिता समस्तसान्त्ववादिता ।
विभूषणं द्वयं नृणां न रत्नहेमनिर्मितम् ॥१५॥ इति

आचार्यस्य सर्वतन्त्रस्वतन्त्रतामित्थमभियुक्ता वर्णयन्ति ॥

प । वेदे ब्रह्मसमस्तदङ्गनिचये गर्गोपमस्तत्कथा-
तात्पर्यार्थविवेचने गुरुसमस्तत्कर्मसङ्कीर्तने ।
आसीज्जैमिनिरेव सूत्रनिचयस्यार्थोपसंवर्णने
व्यासेनैव समः स शङ्करगुरुर्जेजीयतां मानसे ॥१६॥

इति । एवमाचार्यवर्योऽतिस्वल्पकालेनैवाभ्यस्तसमस्तविद्यः स्वगुरुणा समविद्योऽभवत् ॥

---

# ४. कनकामलकपूरणम् ॥

दयार्द्रचित्ता जायन्ते महान्तोऽकिञ्चने जने।
शङ्करो विप्रसदनं श्रीसमृद्धमकारयत् ॥१७॥

एवं गुरुकुलमासाद्य ब्रह्मचर्यमनुतिष्ठति शङ्करे तत्प्रभावज्ञा अगस्त्योपमन्युदधीचिगौतमप्रभृतयो महर्षयः सर्वविद्यानामीशानं तं प्रणम्य गूढं भाविकार्यमाभाष्य तदनुग्रहमासाद्य स्वं स्वं निकेतनमाविशन्। तदा समीपग्रामे दरिद्रः कश्चन सुशीलो ब्राह्मणो बभूव। तस्मिन्नाचार्यस्य करुणा समुदेति स्म। अतो जातुचिदाचार्यो द्वादशीदिने भिक्षार्थं तत्सदनं जगाम। उक्तं च—

प।स हि जातु गुरोः कुले वस-
न्सवयोभिः सह भैक्ष्यलिप्सया।
भगवान्भवनं द्विजन्मनो
धनहीनस्य विवेश कस्यचित् ॥१८॥ इति

तस्य गृहिणी तु वटवे भिक्षां दातुं किञ्चिदप्यलभमाना व्याकुलचित्ताऽभवत्। आचार्यस्तु 'भवति भिक्षां देहि' इति द्वित्रिरुच्चैरुवाच। सा च तद्वचनं श्रुत्वा सर्वज्ञाय वर्णिने किमपि समर्पयितुं भाग्यहीनाहं किं करवाणि। भर्त्रा पूर्वेद्युरानीतमामलकफलं वा ददानि इति निश्चित्य एकमामलकफलमादाय गळितामप्यश्रुधारामन्तर्निगृह्य गुरुवरकरसरसिजेऽर्पयामास।

तदा स्वभावत एवार्द्रं गुरुनाथहृदयं तस्यास्साध्व्या विषयेऽतितरामार्द्रमासीत् ॥ उक्तं च—

प। विधिना खलु वञ्चिता वयं वितरीतुं वटवे न शक्नुमः।
अपि भैक्षमकिंचनत्वतो धिगिदं जन्म निरर्थकं गतम्।२९।

इति दीनमुदीरयन्त्यसौ प्रददावामलकं व्रतीन्दवे।
करुणं वचनं निशम्य सोऽप्यभवज्ज्ञाननिधिर्दयार्द्रधीः ॥

इति। तदनुक्षणमेव च स परमाचार्यः,

प। अङ्गं हरेः पुलकभूषणमाश्रयन्ती
भृङ्गाङ्गनेव मुकुळाभरणं तमालम्।
अङ्गीकृताखिलविभूतिरपाङ्गलीला
माङ्गल्यदास्तु मम मङ्गळदेवतायाः ॥२१॥

इत्यादिना कनकधारास्तवेन मङ्गळदेवतामस्तौत्। तेन प्रसन्ना महालक्ष्मीः गुरुराजहृदयानुवर्तिनी तत्सदनमभितः सुवर्णामलकान्यपूरयत्। तेन समृद्धैश्वर्या सा तत्क्षणागतेन कान्तेन सममाचार्यवर्यं प्रणम्य सुखिताऽभवत् ॥

---

## ५. संन्यासग्रहणम् ॥

विज्ञाः शंसन्ति संन्यासं पुनर्जन्मेत्युदीरयन्।
जनन्याऽनुमतो ग्राहाद्विमुक्तो गुरुपुङ्गवः ॥२२॥

इत्थमपूर्णेऽष्टमे वयसि समग्रा अपि समाम्नाया आचार्येणाधीताः। ततः शङ्करो गुरोरनुमतिमवाप्य मातुः सकाशमागच्छत्। आगतं च तं कुमारं प्रसूः शिरस्युपाघ्राय सन्तोषस्य परां काष्ठामविन्दत। लोकानुग्रहायावतीर्णो गुरुमणिस्तदनुगुणं तुरीयाश्रममाश्रयितुमियेष। जननी तु तदाशयपरिपन्थिनी, 'कदा वा सभार्यं पुत्रं विलोक्य नयनानन्दमनुभविष्यामि' इति विचिन्तयन्ती समयं प्रतीक्षमाणाऽवर्तत। तदा विदिततदाशया बहवः कुलीना अहमहमिकया स्वाः स्वाः कन्याः प्रतिग्राहयितुं निरबध्नन्। आचार्यस्य मातुरभिप्रायविरोधेन किञ्चिदपि वक्तुं न मतिरुद्भूत्। एवं सति जातुचिदार्याम्बा किञ्चिदस्वस्थशरीराजनि। अतः स्नातुं तटिनीं गन्तुं सा न शशाक। तदा मातुरर्थे गुरुनाथस्तां वाहिनीं स्वगृहप्रान्ते प्रवहेति समाज्ञापयामास। तथैव सा चूर्णीतरङ्गिणी आलवाय् इति प्रख्याताभिधेया सती गुरुगृहप्रान्ते प्रावहत्। तत्र गुरुपुङ्गवो मातरं स्नपयित्वा स्वयमपि सिष्णासुस्तटिनीमवततार। तदानीं कश्चन ग्राहो द्रुततरमागत्य गुरुराजचरणसरोजं जग्राह। नदी तु कूलङ्कषा पश्यतां मन आकम्पयति स्म। सा तु तीरस्था जननी रक्षणोपायमजानाना 'अनर्थ आपतितः' इत्युच्चैर्वाचं विसृज्य चुक्रोश। तदा ग्राहस्तु गुरुवरमूरुपर्यन्तमग्रसत। तत्क्षणमेवाचार्यो मातरमेवं विज्ञापयामास। "मातः! अल्पायुरेव कुमारः तपस्तोषितस्य भवानीपतेः सकाशाद्भवत्या लब्धः। अतोऽष्टावेव वयांसि म

ललाटलिखितानि । तदनुरोधेनैवेदानीं ग्राहगृहीतोऽस्मि । यदीदानीमेव म्रिये तदा पुत्रेण मयाऽन्त्यकृत्यं तव न निर्वर्त्येत। ममापि दुर्मृतिः स्यात् । ततोऽधुना संन्यासं स्वीकृत्य यदि म्रियेय तदा मम विदेहकैवल्यं भवेत् । तच्च शास्त्रसम्मतम् । तेनास्मत्कुलीना एकविंशतिः पूर्वपुरुषा मोक्षमवाप्नुयुः। तत्रापि पुनरावृत्तिरहितो मोक्षो भवेत् । किञ्च संन्यासो नाम पुनर्जन्मैवेति वृद्धा अभिप्रयन्ति । अतश्च संन्यासस्वीकारे जातुचिन्नक्रमुक्तस्य ममाष्टौ वयांसि वर्धेरन् । अतः सन्यासं स्वीकर्तुमनुजानीहि" इति ॥ सा चार्याम्बा तदुचितं वचनमाकर्ण्यान्यत्किमपि वक्तुमक्षमा तथैव भवत्विति प्रत्युदीरयामास । तदनन्तरक्षणमेव गुरुमणिरपि प्रैषमन्त्रमवदत् । ग्राहोऽपि तदनुक्षणमेव तिरोदधे । उक्तं च प्राचीनशङ्करविजये—

प । इत्याचार्यकुलं विसृज्य जननीमाप्ताष्टमाब्दः स्वयं
प्राप्तः संयमवांछया व्यरचयत्तन्त्रं किमप्यञ्जसा ।
चूर्णीमंतिकमानिनाय जननीधाम्नः स्वराजः प्रभोः
किं वा दुष्करमत्र सर्वजगतीजालक्रियाशीलिनः ॥२३॥
स्नानायेव गतोऽवगाहनविधौ ग्राहग्रहार्तिं पदे
मात्रे काञ्चिदिवोपदर्श्य मधुरं लब्ध्वाऽभ्यनुज्ञां ततः ।
प्रैषोच्चारणपूर्वकं सनियमं जग्राह हृष्टान्तरो
नक्रस्सोऽप्यमुचत्स्वशापविकृतिं पादावमर्शाद्विभोः ॥२४॥

इति ॥ अहो गुरुमणेरहंताममतापरित्यागोऽन्तर्गूढतामापन्न इदानीं संन्यासस्वीकरणात्प्रकाशो जातः ॥ शुक्तिरजत मरु-

मरीचिकाजलतुल्येषु दुरन्तदुःखदायिषु प्रतिभासिकेषु पदा-
र्थेषु गळितेहा महान्तः केन वा विपश्चितामपश्चिमेन प्रशंसितुं
पार्यन्ते । उक्तं च सुनीतिकुसुममालायाम्—

प । अहंममत्वशून्यहृन्महत्त्ववर्णने स्पृहा ।
विनष्टजन्तुनिर्णयेच्छया समाभवेत्स्फुटम् ॥२५॥इति॥

आर्याम्बापि जीवन्तं कुमारमालक्ष्य हृदयेऽमान्तं प्रहर्षं प्रपेदे॥

---

## ६. शापमोक्षः ॥

महत्पादाब्जसंस्पर्शात्प्राणिनां जायते शुभम् ।
गुरुपादाब्जसंस्पर्शाद्गन्धर्वस्त्रिदिवं गतः ॥२६॥

तत्क्षणं दिवि द्योतमानसुन्दरशरीरः कोऽपि गन्धर्वः वसु-
न्धरायामवतीर्य श्रीमत्सद्गुरुचरणारविन्दयोः साष्टाङ्गपातं
प्रणनाम । कस्त्वं? इति गुरुराजेन सकरुणमापृष्टः स गन्धर्वः
सप्रश्रयमेवं विज्ञापयामास– 'भोः स्वामिनः धन्योऽस्मि । भ-
वतामनुग्रहेण विमुक्तशापोऽहं गन्धर्वः । मामकास्सर्वेऽपि मां
हाहाख्यं व्याहरन्ति । जातुचित् प्रासदर्शनाय, सुलभक्रोधा-
यापि सत्कारोचिताय दुर्वाससे समुचितां सत्क्रियां नाकर-
वम् । तेन समुद्दीपितकोपेन महर्षिणा 'ग्राहो भव' इति श-
प्तोऽस्मि । अतो भीतभीतोऽहं 'भगवन्! शापस्य मोक्षकाला-
वधिप्रदानेनानुग्राह्योऽयं वराकः' इति प्रार्थितवानस्मि। सोऽपि

जातकरुणः सर्वलोकस्यापि मोक्षकालानुकूलो भगवदवतारः कालट्यां यदा भविष्यति तदा तवापि मोक्षो भविष्यतीति अनुजग्राह । सान्त्ववचनेन प्रसीदन्ति खलु महात्मानः । अतस्तदारभ्यास्यां कालट्यां चूर्णीसरिति ग्राहशरीरी न्यवसम् । इदानीं शङ्करावतारस्य भवतश्चरणारविन्दग्रहणेन निरस्तनक्रजन्मा स्वां गन्धर्वाकृतिमलभे ' इति । सुध्युपास्यो मस्करिप्रवरोऽपि चन्द्रिकासदृशीमपाङ्गधारां तस्मिन्नवाकिरत्। हाहाभिधस्स गन्धर्वोऽपि, पश्यत्स्वेव सकलेषु कालटीनिवासिजनेष्वाश्चर्यभरितेषु त्रिदशालयं जगाम । मातापि परमानन्दरत्नाकरे निमज्जन्ती 'बालक एह्येहि गृहं गच्छावः' इति स्त्रीजनसुलभेन लपितेन साभिलाषमाजुहाव । यतिराजस्तु

प । भिक्षाप्रदा जनन्यः पितरो गुरवः कुमारकाः शिष्याः ।
एकान्तरमणहेतुः शान्तिर्दयिता विरक्तस्य ॥२७॥

इति हि महान्तोऽभिप्रयन्ति । अतो यथाप्रतिज्ञं तुरीयाश्रमस्थिरीकरणाय क्रमगुरुरन्वेष्टव्यः । तवान्त्यकाले स्मृतिमात्रेणैवागत्य कर्तव्यं निर्वर्तयिष्यामि । 'सर्ववन्द्येन यतिना प्रसूर्वन्द्या विशेषतः' इति शास्त्रानुसारेण त्वां प्रणौमीति प्रणनाम। ततः कथञ्चित् तया कृतानुमतिः गुरोरन्वेषणाय बहुक्षेत्राणि तीर्थानि चाटन्नास । उक्तं च पतञ्जलिविजये—

प । अत्रान्तरे सरिति नक्रगृहीतपादः
संन्यस्य शङ्करमुनिर्दुरिताद्विमुक्तः ।

गोविन्ददेशिकपदाम्बुजदर्शनाय
बद्धादरो बदरिकाश्रममन्वियाय ॥२८॥
शैलान्वनानि सरितो नगराणि पल्ली-
ग्रामान्जनानपि पशून्पथि सोऽथ पश्यन् ।
नन्वैन्द्रजालिक इवाद्भुतमिन्द्रजालं
ब्रह्मैवमेव परिदर्शयतीति मेने ॥ इति ॥२९॥

अथाचार्यः क्रमेण नर्मदामवाप ।

---

## ७. पतञ्जलिवृत्तान्तः ॥

एकः पापं प्रकुरुते फलं भुङ्क्ते महाजनः ।
एकस्य चेष्टया शिष्यसहस्रं भस्मसादभूत् ॥३०॥

अस्ति नर्मदातीरे महान्कश्चन वटपादपः । तन्मूले कस्- चिद्गुहायां कश्चन योगिशेखरः निर्विकल्पकसमाधिमातिष्ठ- एष एवास्मदाचार्यस्य गुरुस्थानोचितं भाग्यमापेदे ॥ गोवि- न्दभगवत्पादाभिधः शेषावतारभूतः सिद्धपुरुषोऽप्ययमेव आदौ श्रीचिदम्बरे ताण्डवमातन्वानो भक्तकल्पकतरुर्नटरा- स्वीयां ढक्कां चतुर्दशवारं शब्दापयाति स्म । तच्छब्दाच्च चतुर्दश सूत्राणि प्रादुरभूवन् । तान्येव मूलतया स्वीकृत्य श्री- पाणिनिर्व्याकरणं रचयामास । तदर्थं विशदयितुं व्युत्प- अपि नापारयन् । तदा ताण्डवमूर्तिः स्वपादकटकभूतं शे- चल चल इति कम्पयामास ॥ ततः शेषः पतञ्जलिनाम्ना गं-

नर्दाख्ये जनपदे आविर्भूय व्याकरणसूत्राणां महाभाष्यमा-कलय्य तस्मिन्नेव चिदम्बरे सहस्रैरपि वदनैः तावत्संख्याके-भ्यः शिष्येभ्य उपदिदिक्षुः स्वनिश्वासगरळेभ्यः तान्त्रक्षितुं यवनिकान्तरितो भूत्वा 'न केनापीयं तिरस्करणी उद्घाटनीया, यस्तु मद्भाषितमुल्लंघिष्यते स सत्वरं ब्रह्मराक्षसो भविष्यति' इति च प्रतिजज्ञे ॥ ततः प्रचलति शान्तिपुरस्सरं महाभाष्य-पाठे प्रायः सर्वेऽपि विदितव्याकरणकलाकौशलाः कलावन्तो ऽमोदन्त । 'महाभाष्यं वा पठनीयं महाराज्यं वा लाळनीयम्' इत्यभियुक्तवाक्यं वैयाकरणैरुपवर्ण्यमानं कस्य वा दिविषद्भा-षाप्रणयिनोऽनवगतम्? । प्रसन्नगम्भीरं तादृशं महाभाष्यं पाठयति शिष्यान्श्रीपतञ्जलौ, चपलचित्तः कश्चन तेष्वन्यतमः सहस्रमुखैः पाठयन्तमनन्तमजानानः, 'कथमेकदा शिष्यसहस्रं पृथक्पृथगाचार्यशेखरः पाठयति' इति जिज्ञासुः यवनिकां किञ्चिदुद्घाटयामास । तदनुक्षणमेव विषज्वालया निःसृतया सर्वेऽपि भस्मसात्कृता अभवन् । उक्तं च पतञ्जलिविजये–

प । प्रतिपुरुषमिहाननैः कियद्भिः
युगपदयं वदतीति विस्मयेन ।
अपहृतमनसोऽथ तेऽपनिन्युः
सपदि तिरस्करणीं तदीक्षणाय ॥२१॥ इत्यादिभिः

श्लोकैः ॥ अहो गुरुवचनव्यतिलंघनोत्थोऽनर्थः दुर्विषहो भ-वति! ॥ फणिपतिरपि तादृशांस्तानालक्ष्य, कथमिदमनुचितं हृदयतोदावहं कार्यमापतितमिति चिन्तयामास ॥ अहो दुर-

तिक्रमं दैवम् । दैवाधीनैव धीमतां धीरपि भ्राम्यति ॥ दै
सत्कुलीना ब्राह्मणाः । एकेन दैवचोदितेन माणवका बहु
नाशं प्रापिताः इति ॥ अथ च विहाय शेषरूपं पतञ्जलिरवतस्थे

## ८. गौडस्य ब्रह्मराक्षसभावः ॥

महदाज्ञोल्लंघयिता नरः शापमवाप्नुयात् ।
गौडः पतञ्जलेराज्ञामुल्लंघ्याप्नोतिपिशाचताम् ॥३२॥

एतर्हि समये विना गुरुनिर्देशं बहिर्गत्वा प्रतिनिवृत्ता स
श्चन शिष्यः 'किं वदिष्यत्याचार्यः' इति कम्पमानकलेव
पुरतो भस्मसात्कृतान्सच्छात्रानवालोकयत् । श्रीपतञ्जलिः
'दिष्ट्या एकोऽपि वा जीवति' इति ननन्द । अथापि यथा
प्रतिज्ञं ब्रह्मराक्षसो भवेति तं शशाप ॥ उक्तं च—

प । फणिपतिरभिवीक्ष्य तादृशांस्ता-
न्कथमिदमित्यनुचिन्त्य यावदास्ते ।
परिसरमुपसृत्य तावदेकः
प्रणमितमौलिरिदं भयादवादीत् ॥३३॥

फणिवर भगवन्प्रसीद मह्यं
बहिरगमं जलमोचनाय यावत् ।
विधुतयवनिकाः कृतापराधा-
बत मम तावदिति स्थिताः सतीर्थ्याः ॥३४॥

इति गदितगिरं शशाप कोपा-
द्यदविहितोत्तरशान्तिमन्त्रपाठः ।
बहिरसि गतवान्पठन्मदीयां
कृतिमपि तद्भव राक्षसोऽञ्जसेति ॥ इति ॥३५॥

अथ च चकितचकितं तं विलोक्य पतञ्जलिर्जातानुकम्पः 'वत्स मा विषीद । 'कर्मणो गतिर्विचित्रा । तव शापावसान-मनुगृह्णामि'

प । निष्ठायां किं रूपं पचेरिति त्वं बुधान्पृच्छ ।
पक्कमिति वदति यस्तं मम कृतिमध्याप्य मुच्यसे शापात् ।३६।'

इत्यादिश्य, व्याकरणमहाभाष्यं मनसैवानुगृह्य गोनर्ददेश-मवाप । तत्र च गोणिकानाम्नीं जननीं नत्वा किञ्चित्कालं तत्रोषित्वा पश्चाच्छेषस्वरूपमादधे । गौडजनपदजातत्वाद्गौड इत्येव प्रख्यातस्सोऽन्तेवास्यपि ब्रह्मराक्षसो भूत्वा सद्य एव नर्मदातीरस्थं वटवृक्षमासाद्य तन्मार्गेणागतानन्तर्वाणीनालक्ष्य पचिधातोर्निष्ठायां किं रूपमिति पृच्छन्नसाधुशब्दं प्रतिवदतो वैयाकरणखसूचीन्भक्षयंश्च कियन्तमनेहसमतिवाहयामास । किञ्च । स्वेनारचितं गुर्वाज्ञोल्लंघनं स्मरन्नपि सः ब्रह्मराक्षस-जन्मानुगुणमेव साहसमवलम्ब्य यात्रिकभीकरो बभूव ॥ यस्तु सुवृत्तः स एव महतीं पदवीं विन्दति । यस्तु न तथा स निन्दनीयो भवति ॥ उक्तं च—

प । सुवृत्ततत्परः पुमान्महोन्नतिं स विन्दति ।
जहाति यः सुवृत्ततां स याति निन्दनीयताम् ॥३७॥इति।

किञ्च । विगर्हितं राक्षसजन्म कदाऽपनेष्यतीति विचिन्त-
यन्स प्रायः प्रक्षीणामङ्गळः संनिहितभावुकश्चासीत् ॥

## ९. शापमोक्षः ॥

शान्तकोपाः प्रसीदन्ति महात्मानोऽपराधिषु ।
पतञ्जलिर्गौडपादं मोचयामास शापतः ॥३८॥

पतञ्जलिरपि तत्प्रतिवचनप्रदाननिपुणं कमपि भूमिष्ठमवि-
लोकयन्स्वांशेन चन्द्रशर्माभिधं कंचन भूसुरं वसुन्धरायामव-
तारयामास । स च ब्रह्मचर्याश्रमे काश्मीरं गत्वा व्याकरण-
सूत्राण्यभ्यस्य दक्षिणदेशे महाभाष्यं प्रचलतीति कर्णाकर्णि-
कया विदित्वा तामेव दिशमभिगच्छन्नास । एवमागच्छन्क-
स्मिंश्चिद्दिवसे सायं सन्ध्यामुपासितुं नर्मदामवततार । स च
प्रकृतराक्षसनिवासभूतस्य वटवृक्षस्य समीपवर्ती प्रदेशः । अथ
स सत्वरमेव यथासम्प्रदायं 'पचधातोर्निष्ठायां किं रूपम्'
इत्यादीनि प्रश्नजातानि अप्राक्षीत् । तावदवधि पचितमित्या-
द्यसाधूनि रूपाण्येव वैयाकरणखसूचयः बहवः प्रत्यूचुः । ए
परं पक्वमित्यादिसाधुरूपाणि प्रयुयुजे । श्रुतमात्र एव स आ
शरः वटतरोरवरुह्य शापमोक्षकालः सन्निहित इति निश्चित्य

द्विजवर वद को भवान्कुतस्त्य-
स्तव किमिहागमने प्रयोजनं वा ।

कृतमतिरसि पाणिनीयशास्त्रे
यदि च रुचिः पठ मत्फणीन्द्रभाष्यम् ॥३९॥ इति ।

जगाद । स तु अन्विष्यमाणं रत्नं करतले पतितमिति भृशं हृष्टः 'मां चन्द्रशर्माणमभिवदन्ति वृद्धाः। महाभाष्यपठनार्थमेव दक्षिणां दिशं प्रति प्रस्थितोऽस्मि' इति बभाषे ॥ स च राक्षसः 'भो वैयाकरण, शुचिनाऽनश्नता जागरूकेण च त्वया पठनीयम् । तच्च महाभाष्यं मत्तोऽन्यत्र न वर्तते' इति वदन् क्षुत्तृष्णानिवर्तकं मन्त्रं तस्मा उपदिश्य पाठयामास । निराहारो निर्निद्रश्च पठन् चन्द्रशर्मा धारणार्थं वटपत्राण्यपचित्य तत्र नखाग्रेण लिखन् मासद्वितये पूर्णमपि महाभाष्यमपठत् । तदा गौडपादोऽपि यथागुरुनियोगं भाष्यपाठावसाने शापान्मुक्तः दिव्यमूर्तिरभवत् । तदनु स्वान्तेऽमान्तमानन्दमनुभूय स गौडपादः चन्द्रशर्माणमनुगृह्य बदरिकाश्रममवाप्य शुकब्रह्मणः प्राप्तोपदेशस्तुरीयाश्रमी ब्रह्मानुसन्धानपरो बभूव ॥ मनीषी चन्द्रशर्मापि अभीष्टलाभहृष्टस्सन्, नखलिखितपतञ्जलिप्रबन्धाभिराममुत्तरीयबद्धं वटदळजालकं शिरसि दधत् वनवर्त्मना निववृते ॥

---

## १०. गोविन्दभगवत्पादवृत्तान्तः ॥

प्रारब्धकर्मवशगा विद्वांसोऽप्युपकुर्वते ।
शिष्यानध्यापयामास चन्द्रशर्मा गृहाश्रमी ॥४०॥

इत्थं वनवर्त्मना निवर्तमानश्चन्द्रशर्मा मध्येपथं वटपर्णसं-
दायं कस्याश्चन तरङ्गिण्यास्तटे निक्षिप्य स्नातुमवततार। ततः
कश्चनाजशावकस्तेषु पर्णेषु कानिचिदवृणोत् । तेन विनष्टां-
शस्य तस्य अजभक्षितभाष्यमिति व्यवहारोऽजनि। ततस्त-
रितं उत्तीर्य उज्जयिनीमार्गेण समागच्छन्बहोः कालान्निर्नि-
निराहारश्च स्थितः स चन्द्रशर्मा कस्यचन वैश्यस्य
सदने बहिर्वेदिकायां शयानो बहूनि दिनानि सुष्वाप।
एवं सति कस्मिंश्चिद्दिने तद्गृहस्था रूपिणी श्रीरिव काचन
वैश्यकन्यका निद्रापरवशमपि अक्षीणमुखप्रसादमेनं सिद्धसं-
हननं गुण्यं महापुरुषं विनिश्चित्य 'नूनमयमेव मया परिणेयः'
इति स्वपित्रे निवेदयामास । सोऽपि महान्तं प्रयत्नमास्थाय
अगदंकारेण तन्मूर्ध्नि औषधिरससन्तप्तं तैलमालिप्य पूर्वां
स्थितिं प्रापयामास । तदनु सुप्तोत्थितस्स गौडशिष्यः पर्ण-
भारमादाय प्रस्थातुमारभत । तद्गमनमवगत्य गृहस्वामी वैश्यः
'न गन्तव्यं। एषा भवता परिणेया। तदर्थमेव निद्रापहृतचेतनं
त्वां तैलप्रक्षेपादिप्रयत्नेन स्वस्थमकरवम्' इति न्यषेधत्। स तु
नाहं गृहस्थतामभिवांछामि। अतो मां न निर्बन्धय' इति प्रत्य-
ब्रवीत्। ततः परस्परं जातविवादौ तौ न्यायनिर्णयाय राज-
सभां प्राप्य राज्ञे निवेदयामासतुः। तदा भूपतिश्च चन्द्रशर्मणो
रूपातिशयं ब्रह्मवर्चसं प्रतिभां चावगत्य स्वां कन्यकामपि
दित्सुरभवत् । एवमेव तदुपाध्यायो ब्राह्मणः, तदभिमानभा-
जनीभूतः समृद्धैश्वर्यश्चरमवर्णोऽपि कश्चित् स्वां स्वां कन्यकां

तस्मै प्रदातुमैच्छताम् । अन्ते च तन्निर्बन्धवशंवदस्स चन्द्र-शर्मा 'इदं च दैवविलसितमिव भाति। कन्यकापाणिग्रहणे राज्यस्थानलाभेन महाभाष्यप्रचारणं कर्तुमानुकूल्यं स्यात्' इति विचिन्त्य समकाले चतस्रोऽपि कन्यकाः परिणिनाय । तासु वररुचिविक्रमभट्टिहरिनाम्नश्चतुरः कुमारान् उत्पाद्य, महाभाष्यं पण्डितेभ्यः पाठयित्वान्ते च संसारान्निर्विण्णो बदरिकां प्राप्य तत्र गौडपादैरुपदिष्टब्रह्मविद्योऽन्त्याश्रमं स्वीकृत्य यत्र पूर्वं महाभाष्यमभ्यस्तं तत्र नर्मदातीरे योगनिष्ठामास्थितो बभूव ।

आचार्यराजोऽपि गोविन्दभगवत्पादाभिधमेतमेवाचार्यत्वेन ग्रहीतुं तत्तीरमवाप ॥

---

## ११. गुरूपदेशः ॥

विचक्षणोऽप्यात्मविद्यां गुरोरेवाधिगच्छति ।
गोविन्दयोगिप्रवरादुपदेशमगाद्गुरुः ॥४१॥

तदा तु स महायोगी निश्चलस्वान्तो योगनिष्ठामातिष्ठत । तस्मिन्नेव समये नर्मदा बहून्ग्रामान्सलिलैराप्लावयन्ती प्रवहते स्म। प्रजाश्च पुत्रमित्रकलत्रादिभिरात्तवर्गैः समं प्रवाहसङ्कटं तस्मै

---

१.सततं निगदन्नसेन योऽसौ जय गोविन्द जयेति सूक्तिमेकाम्। श्रितमौनमभूद्यदन्यवादे जयगोविन्दमुनिं तदाहुरेनम्॥ इति ।

महापुरुषाय निवेदयितुकामाः सहस्रशः सङ्घीभूय गता म
मकार्षुः । स तु महायोगी काष्ठवन्निश्चेष्टो निष्ठामातिष्ठते । 
नास्तु भ्राम्यन्ति । आचार्योऽपि योगिवर्यं निष्ठायाः प्रच्य
वयितुं नेहते । प्रवाहपीडा च न शान्तिमयते । किं कर्तुं सुशक
अथापि कलकलारावमुखराभिः प्रजाभिरावेदिते प्रवाहोप
जातानुकम्पः अष्टवयस्कोऽप्याचार्यः सम्पूर्णमपि प्रवाहं नि
रवशेषं स्वस्य घटे प्रवेशयामास । तदाश्चर्यमवलोक्य सर्वे
जनाः कुतूहलभरिताः शब्दापयन्ति स्म । तेन विगलितसम
धिः प्रजाभिरावेदितवृत्तश्च स योगिशेखरः गुरुराजमपार
हिमानमवगत्य सप्रेमभरं तस्मिन्यावत्कटाक्षानवाकिरत् ता
दाचार्यवर्योऽपि प्रदक्षिणनमस्कारस्तोत्रैः योगिप्रवरमभ्यर्च
सांजलिबन्धं तस्य पुरतोऽतिष्ठत् । तदा गोविन्दसंयमी '
माननीयचरित! को भवान् ? ' इत्यप्राक्षीत् । तदा परमाचा

स्वामिन्नहं न पृथिवी न जलं न तेजः
न स्पर्शनो न गगनं न च तद्गुणा वा ।
नापीन्द्रियाण्यपि तु विद्धि ततोऽवशिष्टो
यः केवलो हि परमः स शिवोऽहमस्मि ॥४२॥

इत्यादिभिः श्लोकैः शिवाभिन्नमात्मानं न्यवेदयत् । अ
गोविन्दयोगिवरेण्यः 'अहो अस्मदीयं भाग्यम् । यमीशानं प्रत्य
क्षयितुं महर्षयः कठोरं तपश्चरन्ति । स भवानुपदेशसीमा नो
ल्लङ्घनीयेति मत्सकाशमागत इव प्रतिभाति । तथैव भव
ब्रह्मविद्यामुपदिश्य आत्मानमपि कृतार्थयामि ' इति व्याहरत्

तमाश्लिष्य नारायणप्रथमां परम्परया गौडपादादवगतामात्म-
विद्यां क्रमरीत्या तस्मा उपदिश्यामन्दमानन्दमन्वभवत् ।

---

## १२. गुरोराज्ञा ॥

मनीषिणः स्वशिष्येण ख्यापयन्त्यागमाशयम् ।
आदिशद्भाष्यकलने गुरुं गोविन्दसंयमी ॥४३॥

इत्थं स विदुषामपश्चिमायाचार्याय ब्रह्मविद्यामुपदिश्य तमेत्रमाज्ञापयामास । 'भो प्रियशिष्य! यथाऽत्रसानेऽपि कलेर्न क्षीयेत ब्रह्मविद्या तथा प्रचारणाय भवता यतितव्यम् । मोक्षपुर्यां कांच्यां मूलास्थानभूतो मूलाम्नायः स्थापयितव्यः । तन्मूलाम्नायपरम्परायां ब्रह्मचर्यादेव प्रव्रजतामधिकारो देयः । मूलाम्नायक्रमाय चतुर्णां वेदानां मूलमन्त्रः समुपदेष्टव्यः । भरतखण्डे चतुराशास्वपि चत्वार आम्नायाः स्थापनीयाः । तेषु च प्रत्येकं महावाक्यानि उपदेष्टव्यानि । आम्नायधर्माश्च बोधनीयाः ' इति । तदा दण्डान्वितः काषायवसनः संख्यावतामग्रणीराचार्यमणिरपि 'तथैवाचार्यपादानामाज्ञां शिरसा वहामि ' इत्यभ्युपागच्छत् । किं च किंचित्कालं, भगवन्तं परिचरितुमभिलषामीति निवेद्य वरिवस्यया गोविन्दभगवत्पादान्परितोषयन्नर्मदातीरमध्युवास । एवं परिचरन्तं तमाचार्यमभिवीक्ष्य जातहर्षो गोविन्दसंयमी इत्थमवादीत् । "भो सच्छिष्य!

पुरावृत्तमिदं शृणु । पुरा हिमालयेऽत्रिमहर्षिः सत्रमतनोत्
तदर्थमाहूताः क्रतुभुजः महर्षयश्च सममिळन् । तदा तेषां मह
समवाये मम परमेष्ठिगुरुर्भगवान् व्यासः उपनिषदां तत्वा
मुपदिशन्नास । तदाहं सप्रश्रयं तमपृच्छम् । भगवन्! भव
सर्वेऽपि वेदा व्यस्ताः । महाभारतमारचितम् । अष्टादश पु
णानि ग्रथितानि । योगशास्त्रभाष्यमाविष्कृतम् । ततो नि
शयं निर्णीतार्थग्रहणेन लोका अनुगृहीताः । अथापि सर्व
शास्त्राणां शिरःस्थानीयस्य वेदान्तशास्त्रस्याशयं केऽपि निश्
प्रचं नावगच्छन्ति । यद्यपि लोकानुग्रहपरायणेन भगवत
वेदान्तकुसुमानि सूत्रैर्ग्रथितानि । तथापि पण्डितम्मन्या बह
तेषां सूत्राणामाशयमन्यथयन्तः परस्परं कलहायन्ते । त
भाष्यरूपेण तदाशयो भगवता प्रख्यापनीयः । तेन शान्तक
लहाः सूरयो यथार्थग्रहणेन कृतार्था भवेयुः । तत्र भगवत
कुतोऽनादरः क्रियते? इति । तदा सूत्रकर्ता भगवान्व्यासोऽप्येवं
व्याजहार । 'भोः शिष्याग्रेसर! अभिनन्दनीयोऽयमुचिताव
सरे प्रस्तावप्रणालिकया त्वया निवेद्यमानः प्रश्नः । वेदान्तशा
स्त्रं हि परमेश्वरस्वरूपमेव । अतः स एव तदाशयमाविष्कर्तु
मर्हति । अवतरिष्यति च धरायाम् । तव च शिष्यतामापन्नो
मदीयब्रह्मसूत्राणामुपनिषदां च यत् भाष्यमारचयिष्यति,
तदेव वेदान्ततत्वनिर्णायकमित्यवधेहि ' इति । आतश्च म
च्छिष्यतामापन्नेत चन्द्रशेखरावतारभूतेन भवता भाष्यमाभा
षितव्यम् " इति ।

गुरुराजोऽपि 'यथानिदेशं साधयामि' इति प्रतिश्रुत्य, तदनुमतो वाराणसीमासाद्य, मणिकर्णिकाघट्टमधिवसन्शिष्येभ्य औपनिषदमाशयमाविष्कुर्वन्नास । तदाऽऽचार्यवर्यवाग्वैखरीमपारां प्रथितां श्रुतवन्तो बहवो मस्करिणो देशान्तरेभ्यस्समागत्य मिलन्ति स्म । तदा, गुरुनाथः शारीरकभाष्यपाठनादिना तान्विदितवेदितव्यानाकलयामास । ते च शमदमादिभिरनुगुणैर्गुणैः परिमण्डिता गुरुराजचरणशरणाः प्रसन्नस्वान्ता आसन् ॥

## १३. चण्डालसंवादः ।

वस्तुस्वरूपतत्त्वज्ञमीश्वरोऽपि परीक्षते ।
गुरुं परीक्षांचक्रे यत् विश्वेशोऽन्तिमवेषभृत् ॥४४॥

तदा गुरुनाथप्रथां वसुधायां प्रकटीचिकीर्षुर्विश्वनाथः कर्हिचिद्वासरे भषकतामापन्नैर्निगमैरनुगम्यमानश्चण्डालरूपी, मध्येपथं, गङ्गामवगाह्य मठं प्रति निवर्तमानस्य मस्करिप्रवरस्य पुरत आविर्बभूव । देशिकपुंगवोऽपि समीपमायान्तं कुहनाकोविदं पञ्चममवलोक्य ससंभ्रमं 'अपसर अपसर' इति उच्चैर्वाचमुवाच । तेन जातमन्युरन्त्यज एवमभाणीत्—"भो यतिलांछन! सर्वतो व्यापकं यदात्मतत्वं प्रतिदिनं शिष्येभ्यः समुपदिशसि, तदेव ब्रह्मादिपिपीलिकांततनुषु व्याप्नोति ।

शास्त्राणि च 'संख्यावता क्कापि भेदमतिर्न कार्या' इत्यनुशा
सति । गङ्गांभसि चण्डालवाटीपयःपूरे च प्रतिबिंबितस्य
ऽमृतकिरणस्य स्वरूपे कोवा भेदः समस्ति ?। आतश्च कुतो
'अपसरापसर' इति साग्रहं व्याहरसि" इति ।

आचार्यवर्योऽपि निरस्तसमस्तभेदमात्मस्वरूपं क
तलामलकवत् ज्ञात्वा भाषमाणस्य तस्य वाक्यस्य श्रवणोत्त
क्षणमेव विकसिततरात्मतत्त्वनिर्णय एवं व्याजहार—

"जाग्रत्स्वप्नसुषुप्त्यवस्थासु स्फुटतरा या संविदुज्ज
भते तत्स्वरूपोऽहमेव । चतुर्वदनादिपिपीलिकांततनुषु साक्षि
रूपेण भासमानसंवित्स्वरूपोऽप्यहमेव । 'ये स्थूलपदार्थस्ते
वहिः परिदृश्यन्ते तत्स्वरूपो नाहमस्मि' इति यस्य विदु
स्थिरा प्रज्ञा जागर्ति, स चरमवर्णो वाऽचरमवर्णो वा भवतु,
स एव मे गुरुः" इत्याद्यर्थगंभीरैः पञ्चभिः श्लोकैः स्वाश
विशदयामास । तत्र—

जाग्रत्स्वप्नसुषुप्तिषु स्फुटतरा या संविदुज्जृंभते
या ब्रह्मादिपिपीलिकांततनुषु प्रोता जगत्साक्षिणी ।
सैवाहं न च दृश्यवस्त्विति दृढप्रज्ञाऽपि यस्याऽस्ति चे-
च्चण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम ।
इत्यादिकं मनीषापंचकनाम्ना प्रथते ।

इत्थमाविष्कृताशये देशिकवर्ये, सप्रश्रयं पुरतोऽवलो
कयति सति चण्डालरूपी खण्डपरशुस्तिरोदधे । अहो ! म

नीयमहिमानो महान्तः, यच्छंकरेणापि स्वावतारभूतः शंकरः परीक्ष्यते । गुरुनाथस्तु तिरोहितं तमेव नीललोहितमंतरनुध्यायति स्म ॥

---

## १४. स्वरूपप्रदर्शनम् ॥

---

प्रसीदति महादेवः सर्वं साम्येन पश्यतः ।
विश्वनाथः प्रसन्नोऽभूत् शंकराय महात्मने ॥४६॥

इत्थमनुध्यायति यतिपतौ, पुरतस्तेजःपुंजप्रकाशितपरिसरप्रदेशः कलानिधिकलावतंसः विभूतिविभूषितविग्रहो रुद्राक्षमालापरिष्कृतविशालवक्षाः विशालाक्षीजानिर्विश्वनाथः प्रत्यक्षीबभूव । तदा पूर्वं भषकतामापन्ना निगमाः पौरुषं रूपमादधाना अर्थ्याभिः स्तुतिभिः श्रीकण्ठमस्तुवन् । नयनपथपांथीकृतभगवत्स्वरूपाः सर्वेऽपि विचक्षणा भक्तिभरितस्वान्ताः परमानंदपयोनिधौ ममज्जुः । तदा गुरुनाथश्च भीतिभक्तिविनीतिभरितः साष्टांगपातं भगवच्चरणनलिनयोः प्रणिपत्यैवं तुष्टाव —

यदालोकादन्तर्बहिरपि च लोको वितिमिरो
न मंजूषा यस्य त्रिजगति न शाणो नच खानिः ।
यतन्ते चैकान्तं रहसि यतयो यत्प्रणयिनो
नमस्तस्मै स्वस्मै निखिलनिगमोत्तंसमणये ॥४७॥

भगवन्! 'वेदाहमेतं पुरुषं महान्तम्' इति साङ्क्षा
मायनन्तो निगमा येन भवता श्वानः कृताः । वाङ्मनसाग
चरस्स भवान् मादृशेन पामरेण कथं स्तोतुं शक्यते इति।

तदा सर्वमंगलाकान्तस्तं यमिशेखरं करतलेन चंदना
पि शीतलेन संस्पृश्य, सुरप्रवरचिरकांक्षितानि वीक्षितां
तस्मिन्विकिरन्नमृतासारनिकरवर्षिणा सरसभाषितजातेना
दयन्नावभाषे—

"भो भक्तवतंस! सर्वात्मभावं प्रकाशयितुकामेन म
मायावेषमवलंब्य, त्वं परीक्षितोऽसि । विचित्रगुणमायास
योऽहं पूर्वकल्पीयक्रमसजातीयक्रमभास्वरं निश्वसितवत्
भूतमपौरुषेयं वेदराशिं महर्षिपरंपरया लोकानुग्रहाय धरा
प्राकाशयम् । तदर्थाश्चाद्यतनैः पण्डितंमन्यैः कापुरुषैः
र्थीकृताः । अतस्तदाशयः परपक्षखण्डनपूर्वकं काश्यां त
स्थापनीयः । कर्मब्रह्मोभयप्रतिपादनपरे तस्मिन् वेदराशौ
ह्मस्वरूपप्रतिपादनपरवेदान्तभागस्य, वैयासिकब्रह्मसूत्रा
श्रीभगवद्गीतायाश्च भाष्यमाभाषितव्यम् । किञ्च, आसेतु
षाराचलमनवद्या ब्रह्मविद्या प्रचारणीया । मन्दमेधा अ
वेदान्ताशयं यथा सुखेनावगच्छेयुः तथा श्लोकरूपप्रकरण
जातानि प्रकल्पनीयानि । श्लोकरूपेण निबध्यमाना अपि
दान्तसाराः सरसं सतां चेतसि समारोहेयुः । उक्तंच—

अहं श्लोककृदित्येव स परे व्योम्नि मोदते ।
सर्वे विद्याः पुराणानि सेतिहासास्तथाखिलाः ॥४

स्मृतयश्चापि विख्याताः छन्दोरूपेण मानद ।
सर्वा श्लोकमयी वाणी भुवने पुण्यकृत्तमा ॥४९॥ इति।

किञ्च, गुणश्लाघ्यं सुवृत्ताढ्यमलंकारैरलंकृतं दोषहीनं ध्वनिमयं च काव्यं यः कुरुते स पतितकायोऽपि यशःकायेन त्रिलोक्यां प्रथते । उक्तश्च कविमहिमा —

कविः साक्षात्परं दैवं कविः साक्षात्परायणम् ।
कविरेव परा विद्या कविरेव परो गुरुः ॥५०॥ इति ।

किं बहुना पितामह वाल्मीकि व्यासप्रमुखाः कविशेखरा इत्येव लब्धवर्णैरीड्यन्ते । कविता हि नाम परदेवतायाः प्रसादरूपिणी । अतश्च, श्लोकरूपाणि प्रकरणानि, लोकक्षेमकराणि करणीयान्यन्यानि च निष्प्रत्यूहमारचय्य, मोक्षधर्मं स्थापय । त्वया करिष्यमाणमेव भाष्यं सुमनसां संसदि तत्वनिर्णायकं भविष्यति " इति ।

आचार्यवर्योऽपि 'भगवन्! भक्तानुग्रहतत्परस्य भवतः प्रसादेन सर्वमपि साधयामि' इति प्रतिवदन्प्रहृस्तस्थौ । तदा चंद्रशेखरोऽपि चंद्रिकासोदरया कटाक्षधारया परमाचार्यमाह्लादयन्नन्तर्दधे ॥

---

## १५. गुरुभक्तिः ।

---

देशिकेन्द्रपदद्वंद्वभक्तं रक्षन्ति देवताः ।
निक्षिप्य पद्मं त्रिस्रोताः सनन्दनमतारयत् ॥५१॥

अथाचार्यवर्योऽपि, तं विश्वनाथं गोविंदभगवत्पादं चा
नुकूलमनुध्यायन्कुशलैः कलावद्भिः कर्मन्दिवृन्दैर्वन्दितपदार
विन्दद्वंद्वो यथाप्रतिज्ञं अमृतसारनिकराहङ्कारतस्कररसस
षितजातसंजातामोदं नवनीतमिव बहुमतं प्रसन्नगंभीरं शा
रीरकं महाभाष्यं निगमान्तभाष्यं भगवद्गीताभाष्यं श्लोकां
परिष्कृतानि प्रकरणानि च ग्रन्थयित्वा शिष्यानध्यापयामास

तदा । काश्यां तु मरणान्मुक्तिः जननात्कमलालये ।
दर्शनादभ्रसदसि स्मरणादरुणाचले ॥९२॥ इति

सत्यपि प्रामाणिकवाक्ये, सर्वेऽपि शिष्या गुरुवरवद
नारविन्दनिर्गलप्रसृमर शारीरकभाष्यादि ग्रंथप्रवाहे सुखमग्
ता इहैव जीवन्मुक्ताश्च बभूवुः । तेन दिगन्तविश्रान्तायां गु
नाथप्रथायां देशान्तरेभ्योऽप्यसंख्याताः संख्यावन्तः संघं
वाराणसीमासाद्य गुरुचरणं शरणं प्रपन्ना अञ्जसा भवतार
आचार्योपदिष्टं महावाक्यं शृण्वन्तो मनननिदिध्यासनाभ्
समयं यापयामासुः । तदा कवेरजाप्रवाहशीकरावहपवमानप्र
सरपरिपूतात् चोळजनपदात् सनंदननामधेयो बुधोत्तमः सम
गत्य जगद्गुरुचरणसरोरुहयोः प्रणम्य 'अयमपि शिष्यप
रमाणुरंगीकार्यः' इत्यभ्यर्थयामास । सद्गुरुरपि वयसाल्पी
यांसमपि महसा गरीयांसं तं सान्तरङ्गमङ्गीचकार ।

को वा साक्षरः पुरुषः कावेरीतीर्थव्रातपरिपूतचोळदेशवा
सिनं विप्रवर्यं न बहुमन्वीत ? । उक्तंच शिवलीलार्णवे—

अध्येतुमध्यापयितुं च तंत्राण्याहर्तुमर्थानथ चोपभोक्तुम् ।
स्वर्गापवर्गौ च वशे विधातुं जात्यैव यस्मिन्द्राविडा निरूढाः ॥
स्वादीयसी यत्र कवेरजैव ततस्तरां केरफलोदकानि ।
ततस्तरां चापि कवेर्विलासाः प्रसन्नगंभीरपदाः कवीनाम् ॥
द्रष्टुं न रंभापनसाम्रकेरच्छायावृते यत्र हि शक्यमर्कम् ।
शक्यं तु संभावयितुं सरोजसौरभ्यसंभारहरैः समीरैः ॥
ये जातिभेदाः क्रमुकाम्रकेरशालीक्षुरम्भाफणिवल्लरीणाम् ।
क्षुत्पिपासवस्तेषु चरन्ति पांथा विश्रम्य विश्रम्य चिराय यस्मिन्
सान्यत्रसिंधुर्ननु यात्र कुल्या तेऽन्यत्र धन्या इह ये कदर्याः ।
अभ्यस्तविद्या इव येऽत्र किंचिदन्यत्र विद्यागुरवस्त एव ॥

इत्यादिना श्लोकजातेन ।

इत्थमङ्गीकृत्य तं सनन्दनं परमहंसः परमाचार्यः, शारीरकं भाष्यं त्रिः पाठयामास । स च पठितभाष्यधारणः सर्वातिशायिधिषणो गुरुप्रवरे परमभक्तश्च बभूव । अतो गुरुपुंगवस्तदागमनानन्तरमेवेतरानपि मस्करिप्रवरान्पाठयामास । तदसहमानास्ते कलुषितचित्ताः आसन् । विदिततदाशयो देशिकसंक्रन्दनोऽपि सनन्दनस्य भक्तिप्रकर्षं तद्विषद्भ्यः आविश्चिकीर्षुः कर्हिचिद्वासरे गङ्गोत्तरकूलस्थितं सनन्दनमालक्ष्य 'सत्वरं काषायं वासः समानय' इत्युच्चैराजुहाव । तदा तु भागीरथी सलिलैः कूलंकषा पश्यतां चेत आकंपयति स्म । तत्क्षणे तरणसाधनतरणिरपि नादृश्यत ।

सनन्दनस्तु ज्ञानेन गरिष्ठोऽपि वयसा कनिष्ठः । किं कर्तुं शु
कम् ? । अन्ततस्स गुरुनिदेशविलम्बमसहमानो मोदमान
स्थल इव जले पादाभ्यामेव धावन्नुत्तरं तीरं प्राप्तुं प्राक्रम
तदा तस्य निश्चितां गुरुभक्तिमवगत्य मन्दाकिनी प्रतिपदे
कैकं पद्मं निधाय तं स्वपारं गमयामास । उक्तञ्च ।

संतारिकानवधिसंसृतिसागरस्य
क्किं तारयेन्न सरितं गुरुपादभक्तिः ।
इत्यंजसा प्रविशतः सलिलं द्युसिंधुः
पद्मान्युदञ्चयति तस्य पदे पदे स्म ॥५८॥ इति

सनन्दनस्य हि अपारसंसारपारावारादुत्तारयित्र्याः
गुरुभक्तेः सपारायाः सुरदीर्घिकायास्संतारणं न महत्कार्यमि
ति दृढा मतिरासीत् । अतोऽनायासेन गुरुसकाशमासाद्य का
षायं वासः स्वेनानीतं गुरुमन्त्ररस्य पुरतो निदधे । बद्धस्पर्धा
श्च ते सच्छात्राः अनुपमां तद्भक्तिं बहुमन्यमाना दुरीकृतदु
राशयाः देशिकेन्द्रपदारविंदयोः प्रणिपत्य 'क्षंतव्योऽस्माकमप
राधः' इति प्रार्थयांचक्रिरे । ततो गुरुशेखरोऽपि, तेषां स
दाचार्यनिष्ठामचञ्चलां भक्तिं श्रेयस्करीं प्रख्याप्य सनन्द
पद्मपादनाम्ना आजुहाव । तदाप्रभृति तस्य पद्मपाद इति प्रसि
द्धिरुदभूत् । आचार्यराजोऽपि भाष्यं पाठयन् सर्वानपि मह
भरितान् चकार ॥

---

## १६. व्यासानुग्रहः।

पाराशर्यो वृद्धवेषो भाष्यगांभीर्यतोषितः।
दिग्जयार्थं गुरोरायुश्चक्रे द्विगुणितं पुनः ॥५९॥

इत्थं पाठयति शिष्येभ्यः शारीरकं भाष्यं परमहंसे, साधनचतुष्टयसंपन्ना बहवोऽन्तेवासिनः, समुपदिष्टतत्वार्थास्सन्तो भिन्नहृदयग्रंथयश्छिन्नसर्वसंशयाः क्षीणसर्वकर्माणो जीवन्मुक्ताश्चाभवन्। एवं सति कर्हिंचिद्वासरे पलितशिराः महसा भास्वरः कश्चन स्थविरभूसुरः, गुरुराजसविधमागत्य, "भोः शिष्याः! कः पाठोऽद्य चलति" इत्यप्राक्षीत्। तदा, ते शारीरकभाष्यपाठः प्रचलति इति प्रत्यूचुः। तदाकर्ण्य स वृद्धभूदेवः 'भो मस्करिणः! कांश्चन विशयानपोहितुं भवतामाचार्येण विवदिषुरस्मि' इति यावदुवाच तावदाचार्यशेखरोऽपि 'तथैव भवतु आगच्छन्तु भवन्तः' इति स्वयमेव सोत्साहं तं महान्तं पार्श्वमाकारयामास। तदनु, 'तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्' इत्यस्मिन्दुरूहे सूत्रे परस्परं निरंतरमुत्तरोत्तरं वादोऽवर्धत। एवमष्टौ वासरा गताः। अन्ततः शङ्करभाषितस्योपरि भाषितुमनिष्णातो वृद्धभूसुरः, 'वेदा अप्रमाणमिति साधयामि' इति वक्तुं प्राक्रमत। तदानीं कुशाग्रधीः पद्मपादः, 'दिवसाष्टकेन विवदमानोऽयं सुधीर्नसाधारणः पुरुषो भवितुमर्हति। नूनमेष सूत्रकर्ता भगवान्वेदव्यास एव। अतोऽयं विवादः कल्पशतेनापि न पूर्तिमेष्यति।

अतो यथाकथञ्चिद्वादोपशमं करवाणि' इति समालोच्य तौ महापूरुषावालोक्य—

शङ्करः शङ्करः साक्षाद् व्यासो नारायणो हरिः।
तयोर्विवादे संप्राप्ते किंकरः किंकरोऽस्म्यहम् ॥६०॥

इति सप्रश्रयमुवाच । देशिकराजोऽपि तद्वचनमाकर्ण्य, तं कृष्णद्वैपायनमेव निर्णीय 'भगवन्! भवत्सूत्राणां मामकं भाष्यमनुगताशयं यदि सहसैव स्वरूपप्रदर्शनेनानुग्राह्योऽयं जनः' इति सांजलिपुटस्तस्थौ। तदुत्तरक्षणमेव जटामकुटधारी भस्मरुद्राक्षविभूषितविग्रहो भगवान्पराशरतनयः पुरतः प्रत्यक्षीभूय गुरुराजमेवमवादीत् । 'भो वेदान्ताशयनिरूपणदक्ष, भवतोऽपारं महिमानं मह्यां प्रख्यापयितुमेव परिगृहीतजरठविग्रहोऽहं बहुधा वादनिवहैः परीक्ष्य भवन्तं विचक्षणमालक्ष्य प्रमुदितोऽस्मि। विना भवन्तं मदाशयप्रकाशनेऽपरः कः शक्नोति? शिवस्य हृदयं विष्णुः विष्णोश्च हृदयं शिवः, इत्यावयोर्हृदयमावामेव विजानीवः। तावकमेवेदं शारीरकं भाष्यं ब्रह्मसूत्रानुस्यूतवेदान्तकुसुमामोदाधिवासितं सत् प्रज्ञावतां संशयं निराकृत्य वास्तवाशयं विशदयति' इति ।

परमाचार्योऽपि परमानंदभरितांतरङ्गः सात्यवतेयमवलोक्य, 'भगवन्! भवताऽत्रैः सत्रे मदाचार्यपरिपृष्टेन यथा प्रस्तुतम्, तथैव भाष्यमाकलय्य बहुभ्यो मयोपदिष्टम्। प्रकरणानि च सर्वोपकारक्षमाणि ग्रथितानि । इतः परं कैलासं

जिगमिषुरस्मि' इति बभाषे ॥ तदा बादरायणोऽपि, एवं व्याजहार ।

'भोः शङ्कर! कमलासनेन ललाटलिखितान्यष्टौ वयांसि संन्यासस्वीकरणेन भवता द्विगुणीकृतानि। तदुपयोगश्च भाष्यकलनादिना सफलीकृतः । अथापि किञ्चिदवशिष्टं कर्तव्यमस्ति। इतः परं दिग्जयाय प्रस्थाय, तत्र तत्र रूढमूलानि ह्रासप्रतिमतानि समूलकाषं कषित्वा वैदिकानि षण्मतानि स्थापनीयानि । जनपदान्तरेष्वपि वेदान्तभाष्यं प्रकाश्य सकलदेशानां मतानां च गुरूर्भूत्वा श्रीकाञ्चीपुरस्थं सर्वज्ञपीठमारुह्य, पश्चात्कैलासगमनं सांप्रतं भाति। तदर्थं षोडश वयांसि मया दीयन्ते' इति। आचार्यवर्योऽपि तथैव भगवदनुग्रहेणावशिष्टं कार्यं साधयामि इति उत्तमाङ्गेन तन्निदेशमवहत् । श्रीवेदव्यासोऽपि गुरुशेखरमनुगृह्य, पश्यत्स्वेव सर्वेष्वपि यमिप्रवरेषु, तिरोदधे ॥

तिष्ये पावकशेवधीषुनयने (२५९३) चूर्णीतटे नन्दने
प्रादुर्भूय जगद्गुरुः शिवगुरोः पुत्रात्मना शंकरः।
वेदान्साङ्गचयान्क्रमाद्गुरुकुलादभ्यस्य संन्यस्य च
श्री गोविन्दमहेशदृष्टिमुदितः व्यासेडितः पातु नः ॥

॥ इति श्री शङ्कराचार्यचरित्रे प्रथमो भागः ॥

---

## ॥ अथ द्वितीयभागः ॥

सदाशिवसमारम्भां शङ्कराचार्यमध्यमाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरंपराम् ॥ १ ॥

---

## १. कुमारिलदर्शनम् ।

---

धर्मोपदेशमातन्वन्ननुगृह्णन्कुमारिलम् ।
कुष्ठिनं जनयन् स्वस्थं जयत्याचार्यपुंगवः ॥२॥

इत्थं बादरायणाद्वाप्ताधिकायुर्यमिराजो दिग्जयाय प्रथमं प्राचीं दिशं प्रस्थाय तद्देशाधिपेन हालमहाराजेन समुप-चरितः तत्रत्यानां जनानां सुखावबोधान्धर्मानेवमुपदिदेश। "भोः ऐहिकामुष्मिकश्रेयस्कामाः सज्जनाः! इमानि वाक्यानि सावधानमाकर्ण्य, तथैवानुष्ठाय परमं श्रेयः प्राप्नुत ।

अध्येतव्या नित्यं द्विजैर्वेदाः । अनुष्ठातव्या वेदोदित-कर्मनिवहाः । विधातव्या परमेश्वरसपर्या तेन कर्मसमवायेन। त्यक्तव्याः पापप्रवृत्तयः । अनुसंधातव्याः संसारसुखे अशेषा दोषाः । व्यवसेया आत्मविचारचर्चा । आश्रयणीया निज-गृहात्तूर्णं विनिर्गत्य पर्वतगुहा । परिचेतव्या दृढतरा शांत्यादिसमृद्धिः । संत्यक्तव्या कर्मपटली मुमुक्षुभिर-धिकारसंपन्नैः । संसेव्याः सन्तो विद्वांसः । संप्रपत्तव्या तेषां

पादुका । प्रार्थनीया ब्रह्मविचारसरणिः । समाकर्णनीया नि-गमान्तवाणी । विचारणीया वाक्यार्थपरंपरा । समाश्रयणीया निगमान्तसिद्धान्तपद्वी । अवलम्बनीया दुस्तर्कविरतिः । अनुसंधातव्या श्रुत्यनुकूला युक्तिः । विभावनीया ब्रह्मास्मीति-भावना । परित्यक्तव्या प्रतिदिनमहंकृतिः । चिकित्सनीया क्षुद्व्याधिः । भोक्तव्या प्रतिगृहं यथोचितमार्जिता भिक्षा वर्णि-ना यतिना च । परिहर्तव्यं स्वाद्वन्नयाचनम् । संतोष्टव्यं विधि-वशात्प्राप्तेनाभीष्टेन । अभीप्सितव्यमौदासीन्यं विफलेषु का-र्येषु । उत्सर्जनीयं नैष्ठुर्यं जनतायां । विषहणीयं शीतोष्णादि द्वंद्वम् । हातव्यं वृथावाक्यानुसरणम् । आसितव्यं सुखेन वि-जने प्रदेशे । समाधातव्यं परब्रह्मणि चेतः । सुसमीक्षणीयः सर्वत्र पूर्णतया परमात्मा । दर्शनीयो बाधितत्वेन सर्वः प्रपञ्चः । प्रविलापनीयः प्राक्कर्मसमवायः । हातव्य आगामिकर्मसंश्लेषः अप्रतिहतज्ञानबलेन । भोक्तव्यः प्रारब्धनिकरोऽपरिहर्तव्यत-या । स्थातव्यं परब्रह्माभिन्नतया । इति यथाधिकारं यथाव-र्णाश्रमानुगुण्यं सर्वैरपि आस्तिकपदवी द्रढयितव्या "। इति ।

ते च हालभूपालपुरोगा जानपदा जनाः संमान्य मा-न्यगिरं 'अनुगृहीताः स्मो वेदसारोपदेशेन' इति मस्करिप्र-वरचरणसरोजयोः साष्टाङ्गपातं प्रणेमुः । अथ च त्रिलोकी-शोकापनोदको गुरुनाथः, विनीतैरन्तेवासिभिः परिवृतो मग-धेषु वंगेषु च चरित्वा , तत्रत्यैरभिष्टुतो दुर्मतनिराकरिष्णुः

सन्मतवर्धिष्णुश्चास । इत्थं संचरिष्णुराचार्यराजः कर्मण एव मोक्षंप्रति स्वतंत्रसाधनतां साधयन्तं प्रयागमधिवसन्तं कुमारिलभट्टं जेतुमियेष । प्रयागो हि प्रकृष्टः पुण्यप्रदेशः । उक्तं च ब्रह्मपुराणे—

गङ्गायमुनयोर्मध्ये यत्र गुप्ता सरस्वती ।
तस्या दर्शनमात्रेण पूतो भवति पातकी ॥ ३ ॥
प्रकृष्टत्वात्प्रयागोऽसौ प्राधान्याद्राजशब्दवान् ।
तीर्थराजप्रयागस्य दर्शनं भुवि दुर्लभम् ॥ ४ ॥ इति ।

तदा तु तत्र मीमांसाशास्त्रप्रवर्तकः कुमारिलभट्टः शरीरत्यागाय यतिष्यत इत्युदन्त उदभूत् । स तु निगमनिन्दाश्रवणचेतसां शून्यवादिनां मतस्य निराकरणाय धरणाववतीर्णः श्रीकुमारः । एनं वृत्तान्तं शिष्यपरिवृतस्य गुरुपुङ्गवस्य सविधे महनीयाः केचित्सकारणं व्यजिज्ञपन् ।

'भगवन् ! बौद्धसमयक्षपणकृतदीक्षः कुमारिलः पूर्वं तन्मतरहस्यमवगन्तुकामः तन्मताचार्यस्य महावीरस्य निकटे जैनवेषेण प्रच्छन्नोऽधीयानः कंचित्कालमुवास । तदा जातुचित्तथागतशिष्येषु बहुधा वेदनिन्दानिरतेषु, अस्य नेत्राभ्यामश्रूणि गलन्ति स्म । ते तु तदवलोक्य 'नूनमेष ब्राह्मण एव' इति निश्चित्य सौधादेनमधः पातयामासुः । पात्यमानश्च सोऽपि 'यदि वेदाः प्रमाणं स्युः, तदा निरुपद्रवः पतेयं' इति वदन्नेव पपात । पततश्च तस्य शिलासंघर्षणेन लोचनमेकं काणमजनि । ततो

दूयमानमानसे तस्मिन्, काचिदशरीरिणी वाणी बभूव । कुमारिल ! वेदाः प्रमाणं यदीति संशयकोट्युच्चारणेन तत्र नयनस्यैकस्यांध्यमासीत् । अतो मा विषीद। 'त्वयेतः परं निगमप्रामाण्यं स्थापनीयम् । तेन लोकानुकूल्यं भविष्यति, इति । तथैव स प्रस्थाय प्रतिदिशं प्रबलतामापन्नं बौद्धसमयं क्षपयित्वा निगमपथं स्थिरीचकार । अथापि भिन्नमतस्याप्यक्षरप्रदातुराचार्यस्याहितमात्रहन्त्री तन्मतगर्हा श्रेयःपरिपंथिनी' इति तद्दोषपरिहाराय धर्मनिष्णातः स तुषाग्निमात्मत्यागाय प्रयतते इति ।

एवं तैरभिहितो भिक्षुराजश्छात्रैः समं सत्वरं प्रस्थाय तमुद्देशमाजगाम । तदानीं यथोद्दिष्टमेव स महानुभावः तुषाग्नौ कटिपर्यन्तं दग्धकलेबरो बभूव । दृष्टमात्र एव परमाचार्योऽतितरां विषसाद । दग्धार्धांगोऽपि कुमारिलः ' भगवन्धन्योऽस्मि । मया पूर्वमीमांसा स्थापिता । एतदवस्थापन्नेन मया वादो न घटते । अथापि काश्मीरं गत्वा माहिष्मतीपुरीमधिवसन्तं मम शिष्यं मण्डनमिश्रमेत्य तं विजित्य कृतार्थयतु भवान् । मुहूर्तात्पूर्वमेव यदि भवन्तं साक्षात्कुर्यां तदा तेनैव प्रक्षीणगुरुनिन्दामलो नात्मानं तुषानलेऽवसादयेयम्। दग्धार्धांगेन मया नेतः परमुच्छ्वसितुमपि शक्यते' इति व्याहरन्नेव सानुग्रहं गुरुराजेनावलोकितः तत्संनिधौ भौतिकं शरीरं दाहयित्वा स्वे महिम्नि प्रतिष्ठितो बभूव ।

अनन्तरं च तत्र कदाचित् ग्रामविशेषे, कूश्माण्डमिव पाण्डुराङ्गं लज्जया जनावलोकनाक्षमं 'मां त्रायस्व त्रायस्व' इति पुनः पुनः प्रणमन्तं कंचन कुष्ठिनं साधनचतुष्टयसंपन्नमालोक्य, प्रश्नव्याजेन तद्वाक्येनैव तत्त्वं बोधयितुं किं ज्योतिस्तव-इत्यादिना पप्रच्छ। स चानुणमभिप्रायमुत्तरयामास। तच्चोक्तम्-

किं ज्योतिस्तव भानुमानहनि मे रात्रौ प्रदीपादिकं
स्यादेवं रविदीपदर्शनविधौ किं ज्योतिराख्याहि मे ।
चक्षुः तस्य निमीलनादिसमये किं धीः धियो दर्शने
किं तत्राहमतो भवान् परमकं ज्योतिस्तदस्मि प्रभो ॥ ५ ॥

इति । तदानीं कल्याणचरितः परमहंसस्तं स्पृष्ट्वा विगतकुष्ठं कृत्वानुजग्राह ॥

---

## २. मण्डनमिश्रविजयः ।

विद्वांसं पणबन्धेन स्वायत्तीकुरुते बुधः ।
मण्डनं वशयामास पणबंधेन देशिकः ॥६॥

अथाचार्यमणिरपि पुण्यकृतामधिवासं वसुधामवतीर्णं वासवावासमिव प्रद्योतमानं काश्मीरप्रदेशमाजगाम । तत्र च, निगमाध्ययननिरतैः गुरुभक्तिभरितैः पटुभिर्वटुभिः परिवृतां, निगमप्रामाण्यप्रकटनचतुरैर्भूसुरैरभिनंदनीयां, आज्यगंधिभिः वैतानाग्निभिः देदीप्यमानयज्ञशालां, पूर्वमीमांसावादकुतूहलै-

स्तूचानैरभिमण्डितां, माहिष्मतीं पुरीं प्रविवेश। तत्र च अ-तिप्रख्यातो मण्डनमिश्रो राजराजोपमविभवः वैदिककर्मणा-ऽनवरतमनुष्ठाता परमेष्ठिनोऽवतारभूतो महापुरुषः। अस्यैव कुटुम्बिनी सरसवाणी अक्षररूपिण्याः परदेवतायाः सरस्व-त्याः अंशेन प्रादुर्भूता। विना कर्मपथं, भक्त्यादिकः परः पंथाः न श्रेयस इति तस्य दृढः प्रत्ययः। संन्यासिनामवलोकनमपि तस्य हृदयतोदकरं भवेत्। आचार्यशेखरस्य तु, तस्य दिदृक्षायाम-तीव त्वरा। कथमनयोः समागमः संश्लिष्येत्?। एवमपि देशि-कपुंगवः पद्मवनाग्रहारे 'यत्र शुकशारिकाः परस्परं शास्त्रेषु वि-वदन्ते तदेव मण्डनमिश्रस्य सदनम्' इति तत्रत्यजनतामुखे-नावगत्य यस्मिन्दिने तन्निकेतनमाययौ तत् तस्य मण्डनमि-श्रस्य पैतृकं दिनं बभूव। अतः 'कोऽप्यन्तर्न प्रवेशयितव्यः' इति स दौवारिकानाज्ञाप्य, जैमिनिं बादरायणं च श्राद्धे नि-मंत्र्य बद्धश्रद्धं श्राद्धमुपाक्रमत। गुरुराजस्तु परस्परं प्रस्तुत-श्रुतिप्रामाण्यचतुराभिः बहिर्वेदिकावलंबमानपञ्जरासिकाभिः विविधवर्णरमणीयशरीरसुषमाभिः समसमय एव श्रवसोः चक्षुषोश्च दोषज्ञानामपि निरुपमप्रमोदजनयित्रीभिः शुक-शारिकाभिः कमनीयं तन्निलयं पिहितद्वारमालक्ष्य, योगबला-दाकाशपदव्याऽन्तः प्रविवेश। प्रविष्टं च तमवलोक्य व्यास-जैमिनी महर्षभरितांतरङ्गावभूताम्। मण्डनमिश्रः परं तत्प्रवेशं न बहुमन्यत। अथापि स व्यासजैमिनिमुनिवचनपराधीनो भूत्वा परिव्राडधिराजं विष्णुस्थाने वव्रे।

तदा गुरुनाथः 'नाहमन्नभिक्षार्थी किं तु वादभिक्षार्थी' इत्यभाणीत् । मण्डनमिश्रस्तु 'पूर्वमन्नभिक्षा भवतु पश्चाद्वादभिक्षा कार्या' इति सांत्वयित्वा श्राद्धं यथाविधि परिसमापयामास । तदनंतरं कर्मसिद्धान्तस्य वेदान्तसिद्धान्तस्य च विषये वादः प्रस्तुतोऽभूत् । तत्र च वादे 'यदि जेष्यति मस्करिणं मण्डनमिश्रस्तदा गुरुनाथेन गृहस्थता स्वीकरणीया। यदि जेष्यति मण्डनमिश्रं गुरुमणिः तदा तेन पारिव्राज्यमाश्रयितव्यम्' इत्यन्योन्यं पणबंधमाकलय्य, सरसवाणीमेव मध्यस्थतानिर्वाहाय निर्णीय, भाविकार्यवेदिनौ व्यासजैमिनी तन्निकेतनान्निर्गत्य, स्वं स्वमावसथमगच्छताम् । तदा प्रक्रान्तस्तयोर्वादोऽपरिमितैर्वासरैरप्युपरतिं नागमत् । सरसवाणी तु कान्तस्य गुरुराजस्य चान्तरा स्थित्वा मध्यस्थतावहनं न समञ्जसमिति विचिन्त्य तयोरुभयोरपि कण्ठे कुसुममालां संजयित्वा यस्य माला म्लायति स एवान्येन विजितो विज्ञेयः' इति संकेतमाकलय्य गृहकृत्यमाचरिष्णुः प्रतिदिनमपि मध्याह्ने भिक्षायै देशिकप्रवरं भोजनाय स्वकान्तं चाह्वयन्ती बभूव ।

एवं स्थिते, कस्मिंश्चिद्वासरे म्लानां नाथस्य मालामालोकयन्ती तावुभावपि भिक्षायै समाजुहाव । अतः अन्तत आत्मानं गुरुप्रवरेण जितं मन्यमानो मण्डनमिश्रः, यथापणबंधं वेदान्तसिद्धान्तमुररीकृत्य, तुरीयाश्रमं स्वीचकार । लब्धभा-

श्रेयोऽर्थः श्रीशङ्करानुगृहीतः को वा विवेकी अनश्वरमात्मज्ञान-साधनं न बहुमन्वीत? उक्तं च विषमदृष्टांतसमन्वितं पद्यम-भियुक्तेन ।

मर्त्याः संसृतिवार्धिमध्यपतिताः तत्तारकं शङ्करं
सर्वज्ञं शरणागतार्तिहरणं सम्यग्भजध्वं सदा ।
नैवान्यत्करणीयमस्ति भवतां मुक्त्यै न सेवान्तरं
दत्वा किं तरणेर्भृतिं ह्यनडुहः पुच्छश्च संगृह्यते ॥७॥

तदनु गृहीतकाषायवसनं हंसवाहनावतारं स्वकान्तम-वलोकितुमप्यसहिष्णुरिव सा सरसवाणी गगनमार्गेण जिगमिषुस्त्वरते स्म । तदा तां लोके प्रतितिष्ठापयिषुः परमहंसो वनदुर्गामंत्रेण तामाकृष्य 'शारदे! न गंतव्यमन्यत्र भवत्या मदनुमतिं विना । अत्रैव स्थातव्यम्' इति तां प्रार्थयामास । सापि लोकहिताचरिष्णुस्तद्वाक्यं तथैवाचरा-मीत्यङ्गीचकार । मस्करिप्रवरश्च मण्डनमिश्रं सुरेश्वरनाम्ना प्र-ख्यापयामास । किञ्च शिष्यगरिष्ठेन तेन तैत्तिरीयबृहदारण्य-कभाष्ययोर्वार्तिकं रचयामास ।

वार्तिकलक्षणं तु,

उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते ।
तं ग्रंथं वार्तिकं प्राहुः वार्तिकज्ञा मनीषिणः ॥८॥ इति ।

तच्च वार्तिकमंतर्वाणिशिरोमणिविस्मापकं सकलसं-
शयदूरीकरणचणं च भासते। किञ्च गृहस्थवासनावासितोऽयं संन्यासी अद्वैतपथं वितथं कुर्यात् इति केनचित्सहाध्यायिना-ऽभिहितस्तदाशयमसंगतमाविश्चिकीर्षुः, परमाद्वैतबोधकं नैष्कर्म्यसिद्धिनामकं ग्रंथं चाग्रथ्नात् ॥

---

## ३. लिङ्गप्रतिष्ठा।

गोविन्दगौडपादाभ्यां श्लाघितो देशिकोत्तमः।
कैलासनाथमाराध्य लिङ्गपञ्चकमाददे ॥ ९ ॥

इत्थं भिक्षाचराधिराजो विजित्य मण्डनमिश्रं, गौडपादं दिदृक्षुर्वदरीकेदारमासाद्य तत्र कस्याश्चिद्गुहाया द्वारि गोविन्दसंयमिनं अन्तर्गौडपादं च ध्यानैकतानमवगम्य, तावुभावपि हृदये ध्यात्वा—

विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं
पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया।
यः साक्षात्कुरुते प्रबोधसमये स्वात्मानमेवाद्वयं
तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥१०॥

इत्यादिना दक्षिणामूर्त्यष्टकेन तुष्टाव। उभयेऽपि ते तदष्टकश्रवणेन निष्ठायाः प्रबुध्य पुरतो भक्तिनम्रकंधरं गुरुप्रवर-

मालोक्य प्रमोदपुरस्सरमवादिषुः—"भोः शङ्कर ! तत्र संदर्शनेन जातहर्षा वयमास्माकीनं भाग्यं निरुपमं निश्चिनुमः । यतः परमेश्वरावतारभूतो भवान् नयनपथपांथो जातः । अपि निर्वर्तितमवतारकृत्यम् ? अपि प्रकाशितं ब्रह्मसूत्रभाष्यम् ?" इति । गुरुमणिश्च "देशिकेन्द्राः ! नाहमर्हामि श्लाघनां शिष्यपरमाणुः । गुरुचरणानुग्रहेणैव कर्तव्यं सर्वं निर्वर्तितम्" इति सप्रश्रयं प्रत्युवाच । ततस्ते च समेधितकुतूहलाः तेन वाचितं शरीरकभाष्यं निर्विशयं करतलामलकवत् हृदयगुहाधिकरणस्यात्मनोऽवभासकं, सुधामाधुरीतिरस्कारिवाग्वैखरीगभीरं तदेव संप्रतिमन्नं भाष्यमित्यभ्यनन्दन् ।

तत्र च शीतबाधितानाचार्यान्शिष्यांश्च सुखयितुमभिलषन्गुरुपुंगवः परमेश्वरानुग्रहेण उष्णकुण्डमुत्पादयामास । उक्तं च—

तत्रातिशीतार्दितदेशिकस्य
संरक्षणायातुलितप्रभावः ।
तप्तोदकं प्रार्थयते स्म चन्द्र-
कलाधरात्तीर्थकरप्रधानः ॥ ११ ॥

कर्मन्दिबृन्दपतिना गिरिशोऽर्थितः स-
न्संतप्तवारिलहरीं स्वपदारविन्दात् ।
प्रावर्तयत्प्रथयती यतिनाथकीर्तिं
याद्याऽपि तत्र समुदञ्चति तप्ततोया ॥१२॥ इति ।

अथ चाचार्यराजस्ताभ्यां देशिकपुंगवाभ्यां लिङ्गप्रतिष्ठा यंत्रस्थापनादिकं कार्यं कर्तुमाज्ञप्तः । तस्मात् बदरीकेदारात् प्रस्थाय गङ्गोत्तरामाससाद । तत्र सप्तकोटिमंत्रांस्तात्सिद्धीश्चावाप्य श्रीकैलासमाससाद । तत्र च देशिकराजः सर्वफलप्रसवहेतुं करुणाकरं मंदहाससुन्दरवदनारविन्दं भगवन्तं महेश्वरमारराध । भक्तमनोरथाभिवर्षुको भवानीकामुकस्तस्मै देशिकवरेण्याय पञ्च लिङ्गानि अम्बिकारहस्यप्रकाशिनीं सौन्दर्यलहरीं च सानुग्रहमयच्छत् । देशिकेश्वरश्च प्रगृहीतमहेश्वरप्रसादो भगवतानुमतो वसुमतीमागत्य, तेष्वेकं योगालिङ्गमात्मपूजायै गृहीत्वा वदरिकायां मुक्तिलिङ्गं ज्योतिष्मतीपीठं च स्थापयित्वा नेपाळमाययौ । तत्र च बौद्धप्रमुखं निरूढमूलं दुर्मतसन्दोहं निर्मूलं खण्डयित्वा, वैदिकपथं वर्धयित्वा, तद्देशाधिपाय सदुपदेशमतनोत् । किञ्च तज्जनपदललामभूते नीलकण्ठक्षेत्रे वरलिङ्गं प्रत्यतिष्ठिपत् । ततो दक्षिणां दिशं प्रस्थाय तत्र द्वासप्ततिदुर्मतानि विवास्य मतान्तरस्थानपि वैदिकान्ज्ञानपथानुयायिनश्चकार । ततो गुरुवरः क्रमेण पारेसमुद्रं द्वारकायां कालिकापीठं प्रतिष्ठाप्य, आमर्तसोमनाथादिलिङ्गानि समाराध्य, मांधातृपुरे ओंकारेश्वरलिङ्गमभितुष्टाव । इत्थमटन्पूर्वसमुद्रतीरे पूरी इति प्रख्याते जगन्नाथे प्रफुल्लनीलोत्पलोदरसच्छविमाभीरवामनयनानयनामृतांशुमपि नित्यब्रह्मचारिणं कृष्णं सानन्दमालक्ष्य, तत्र विमलापीठमस्थापयत् । ततोऽगस्त्याचरितहरिन्मार्गेण श्रीशैलमासाद्य, तत्र भ्रमराम्बासमेतं

मल्लिकार्जुनलिङ्गमासेव्य शिवानन्दपरवशः शिवानन्दलहरीं ग्रन्थयामास । यस्यायमाद्यः श्लोकः —

कलाभ्यां चूडालंकृतशशिकलाभ्यां निजतपः-
फलाभ्यां भक्तेषु प्रकटितफलाभ्यां भवतु मे ।
शिवाभ्यामस्तोकत्रिभुवनशिवाभ्यां हृदि पुन-
र्भवाभ्यामानन्दस्फुरदनुभवाभ्यां नतिरियम् ॥१३॥

इति । तत्र च निरूढमूलानि पाषण्डादिदुर्मतपण्डवेतण्डकुलानि शिष्यकेसरिभिर्निरवशेषं विदळयामास ।

---

## ४. कापालिकवधः ।

साधुद्रोहपरं मूर्खं निहन्ति नियतिः स्वयम् ।
भैरवं दारयामास नरसिंहो गुरुद्रुहम् ॥१४॥

एवं तत्र तत्र दुर्मतनिराकर्तारं सन्मतप्रवर्धयितारं देशिकराजं वादैरजेयं मन्यमान उग्रभैरवाभिधानः कापालिकहतको वञ्चनया जिघांसुस्तन्निकटमागत्य सप्रश्रयं व्यजिज्ञपत् —

"भोः स्वामिनः ! भवन्तः करुणाशेवधयः। कलेबराभिमानगन्धेनापि विवर्जिताः । साक्षात्कृतपरब्रह्माणः । सततं त्रिजगतीहिताचरिष्णवः । अतो भवतां सकाशे विज्ञापिताशयोऽहं साधितेप्सितो भवितुमभिलषामि" इति ।

आचार्यपरिबृढस्तु 'उच्यतां निःशङ्कम्' इति प्रत्युत्तरयामास।

तदा स धूर्तो जातधैर्य एवमभाषत—"भगवन्तः! धन्योऽस्मि। अहं क्रतुमेकमाहरिष्यामि! तत्र पूर्णाहुतये संपूर्णलक्षणसंपन्नस्य चक्रवर्त्तिनः, सर्वज्ञस्य सन्यासिनो वा, शिरो हुतभुजि होतव्यम्। यदि चक्रवर्तिनमेत्याभ्यर्थयेयं, तदा ममैव मूर्धा लूनो भवेत्। अतो निवृत्तैषणैर्भवद्भिरेवोत्तमाङ्गप्रदानेन यज्ञपूर्तिः कार्या' इति।

देशिकवर्योऽपि तदीयं साहसं वचनमाकर्ण्य, "भोः कापालिक! युक्तमुक्तं भवता। यद्युपयुज्येत परार्थे मामकं भौतिकं शरीरं तदा धन्यो भवेयम्। अथाप्यन्तेवासिनो मदीयमेतादृशं व्यवसायं नाङ्गीकुर्युः। अतः संभृतयागसंभारेण भवता शिष्यविहीनसमयमभिज्ञाय यथाभिलाषितं शिरो गृह्यताम्" इत्यभाणीत्।

स चात्मनः समीहितं साधितं मन्यमानो हर्षभरितः समयं प्रतीक्षमाण आस। अथ जातु शिष्यविसृष्टपार्श्वं ध्यानस्तिमितलोचनं गुरुराजमवगत्य, स मूर्खः त्वरयाभिद्रुत्य निशितेन कृपाणेन परमहंसस्य शंखनिभं कण्ठं छेत्तुं प्रायतत। तदानीं स्नातुं सुरनिम्नगामवतीर्णो गुरुभक्तशिखामणिः पद्मपादः परवशो नरहरिरूपमादधानो गुरुवरसविधं धावन्कापालिककरात्कृपाणं प्रसह्य प्रगृह्य तेनैव तस्य गुरुद्रोहिणः कण्ठ-

माच्छिद्य महान्तमट्टहासमाततान । तेन विशीर्णसमाधिर्गुरुराजः पुरत उत्पाटितशिरसमुग्रभैरवं, गर्जन्तं नरकेसरिणं चालुलोके । अथ च किमिदमतर्कितोपनतं भगवद्दर्शनं? इति समुद्भूतप्रहर्षो गुरुनाथः अकृतकवचःसंमिताभिः स्तुतिभिः तं नरहर्यक्षं तुष्टाव । ताभिः प्रीतो नरहरिः तदनुक्षणमेवांतर्दधे । पद्मपाद एव पुरतोऽवतस्थे । ततः स देशिकेन्द्रः, 'पद्मपाद! कथमिदमतिभीषणं नरसिंहात्मकं वेषान्तरं प्रगृहीतं त्वया?' इति तं पप्रच्छ । तदा स विनीतिपुरःसरमेवं व्याजहार ॥

"भगवन्! पूर्ववृत्तमिदानीं भगवदनुग्रहेण स्मृतिपथमारोहति—पुरा कदाचित् नरसिंहं प्रत्यक्षयितुं हिमाचले तपस्यतो मम पुरस्तात्तत्रस्थः कश्चन वनेचरः समागत्य 'किमर्थं तपस्यसि' इति मामप्राक्षीत् । तदा नरसिंहाख्यमृगदर्शनाय तपश्चरामि' इति प्रत्यब्रवम् । तदा मयि जातप्रत्ययः स किरातः 'किंलक्षणः स मृगः' इति पुनरपि मामप्राक्षीत् ॥

तदाहं 'यः कण्ठादुपरि सिंहाकृतिः अधस्तान्मानवाकारश्च वर्तेत स एव' इति प्रत्यवोचम् । स तु एवं बभाण— 'विपुलेऽप्यस्मिन्कानने मल्लोचनागोचरः कोऽपि नास्ति । त्वदुपवर्णिताकारः परं कोऽपि मृगो नावलोकितः । यदि निश्चयं वर्तेत तदा नूनं शक्नोमि तमानेतुं' इति । 'तत्र न संशयः नूनमस्त्येव तादृशो मृगः' इति प्रत्युक्तः स वनचरः प्रतिवनं प्रतिकन्दरं चान्विष्य तदलाभेन जातखेदः 'यदि सायाह्नाद-

र्वागेव स न लभ्येत तदा प्राणान्हास्यामि' इति प्रतिश्रुत्य पुनरप्यन्वेष्टुं प्राक्रमत । तदा दिवसनाथोऽपि चरमाचलचूड-मवललम्बे । नरकेसरी तु न किरातलोचनगोचरो जातः । किं कुर्यात् मानी वनचरः ? । अन्ततः यथाप्रतिश्रुतमेव सा-हसमवलंब्यासून्जिहासुर्लतादामभिः स्वस्य कंधरामाबबंध । तदनुक्षणमेव भक्तपराधीनो नरहरिः शंखचक्रगदापाणिः पुरतः प्रादुरासीत् । स च प्रमुदितो भक्तिबद्धमपि तं नरसिंहं लतादामभिराबध्य समाकर्षन्मत्सकाशमानिनाय । अथापि स भगवान् मच्चक्षुरविषयो बभूव । तदानीं विषण्णेन मयाभि-ष्टुतो भगवान्प्रत्यक्षीभूय, 'वत्स मा विषीद त्वदपेक्षया व्या-धस्यभक्तिर्गरीयसी अतस्तस्यैवाहं न तव सुलभोऽस्मि । अ-थाप्यावश्यककाले त्वय्येवाविर्भूयानुग्रहीष्यामि' इति व्याहृत्य तिरोबभूव । अतो मन्ये मादृशशिष्यानुग्रहाय भगवान्मय्या-विर्भूय कापालिकहतकं हतवान्–" इति । गुरुसिंहश्च नरसिंहो-पासकं तं प्रशशंस ।

---

## ५. हस्तामलकः ।

---

ज्ञाततत्वो बालिशोऽपि विद्वांसमनुगच्छति ।
प्रभाकरकुमारो हि तत्वज्ञो गुरुमन्वगात् ॥१५॥

इत्थं तीर्थाटने दुर्मतोन्मूलने, भाष्यप्रकटनपटूनामन्ते-वासिनामभिनंदने, संसारासारताप्रबोधने, ब्रह्मानुसंधानप्र

वर्त्तने च बद्धपरिकरो गुरुराजोऽटन्नेव श्रीगोकर्णमाससाद। तत्र च भगवन्तमासेव्य मूकाम्बिकाक्षेत्रमाययौ। तत्र च मृतं बालकमंके निधाय रुदन्तौ ब्राह्मणदम्पती समालक्ष्य, जातानुकम्पो यतिपतिः सुप्तोत्थितमिव तमुत्थापयामास। किञ्च त्रयोदशवयस्केन बालकेन साकमाचार्यराजमासेवितुमागतः प्रभाकरनामा विप्रस्तं निरतिशयशक्तिसंपन्नं ज्ञात्वा साष्टाङ्गपातं प्रणम्य, एवं विज्ञापयामास-- 'भगवन्तः! कुमारोऽयं जन्मनः प्रभृति किमपि वचनं न भाषते। मूकविधानेनायं मयोपनीतः। भवंतस्तु महान्तः। अतोऽयं बालः भवता संभाषणशक्तिसंपन्नः कार्यः' इति। आचार्यमणिरपि प्रणम्य पुरतस्तिष्ठन्तं तमवलोक्य,

कस्त्वं शिशो! कस्य? कुतोऽसि गन्ता?
किं नाम ते? त्वं कुत आगतोऽसि?।
एतद्वद त्वं मम सुप्रसिद्धं
मत्प्रीतये प्रीतिविवर्धनोऽसि ॥१६॥

इति पप्रच्छ। स च पृष्टोत्तरक्षण एव,

नाहं मनुष्यो न च देवयक्षौ
न ब्राह्मणक्षत्रियवैश्यशूद्राः।
न ब्रह्मचारी न गृही वनस्थो
भिक्षुर्नचाहं निजबोधरूपः ॥१७॥

इत्यादिभिर्निगमान्तसारावबोधकैः द्वादशश्लोकैः जीवपराभेदं विशदीचकार। गुरुनाथश्च करतलामलकवत् आत्मतत्वमाविष्कुर्वतस्तस्य हस्तामलक इति नाम चकार। उक्तं च–

प्रकाशयन्तं परमात्मतत्त्वं
करस्थधात्रीफलवद्यदेकम् ।
श्लोकास्तु हस्तामलकाः प्रसिद्धा-
स्तत्कर्तुराख्यापि तथैव वृत्ता ॥१८॥ इति ।

किञ्च । तस्य द्वादशश्लोक्याः स्वयमेवाचार्यवर्यो भाष्यमपि रचयामास । प्रभाकरश्चाभूतपूर्वेण मूकसंभाषणेन परमप्रीतस्तेन सह स्वगेहमाजगाम । तत्र तु यथापूर्वं जोषंभावमापन्नं तमालक्ष्य स प्रभाकरः परमाचार्यमासाद्य तत्कारणमप्राक्षीत् । तदा गुरुनाथस्तु 'ब्रह्मनिष्ठोऽयं तव कुमारः । कुटुम्बविरक्तमना अयं मामेवानुसरिष्यति' इति प्रत्यभाषत । ततः स बालकं गुरुराजसंनिधावेव त्यक्त्वा स्वं मन्दिरं ययौ । तदाप्रभृति हस्तामलकोऽपि शिष्येष्वग्रगण्यो बभूव । एवं सशिष्यः पुण्यक्षेत्राण्यटन्नाचार्यशेखरः द्वादशपंजरिकादीनि लघुप्रकरणानि शिष्यानुग्रहाय ग्रन्थयामास । कदाचित् सर्वसंगपरित्यागिनां महिमानं कौपीनपंचकनामकप्रकरणेनाग्रन्थयत् । तेष्वयमेकः श्लोकः —

वेदान्तवाक्येषु सदा रमन्तो
भिक्षान्नमात्रेण च तुष्टिमन्तः ।
विशोकमन्तःकरणे रमन्तः
कौपीनवन्तः खलु भाग्यवन्तः ॥१९॥ इति ।

---

## ६. तोटकः ।

---

गुरुविश्वासभाक्शिष्यः पाण्डित्यं लभते ध्रुवम् ।
गिरिर्गुरुकृपां प्राप्य कवयामास तोटकम् ॥२०॥

गुरुनाथान्तेवासिषु मन्दमतिरानन्दगिरिनामा कश्चन छात्रः सश्रद्धाभक्तिकं गुरवे वरिवस्यामाचरन्नास । सोऽतिकल्य एव समुत्थाय शरीरशुद्धिमाकलय्य स्नात्वा परमाचार्याय सलिलादिकं सज्जीकृत्य दन्तधावनाय चूतपत्रादिकं दिशेत् । तीर्थावगाहनसमयमभिज्ञाय तस्मै वस्त्रं प्रदाय शार्दूलासनमास्तृणुयात् । गुरुचरणे संवाहनादिकैङ्कर्येण वीतव्यथे कुर्यात् । किं बहुना ? गुरौ तिष्ठति तिष्ठन् निषेदुषि निषेदिवान्, गच्छति गच्छन् सर्वात्मना छायापुरुष इव तमनुसरेत् । स च कदाचित् गुरुवस्त्रशोधनार्थं बहिर्जगाम । तदा सज्जेष्वप्यन्येषु शिष्येषु, तदागमनं प्रतीक्षमाण आचार्यपुंगवः पाठयितुं किञ्चिद्विलंबते स्म । उक्तं च–

तस्मिन्कदाचन विनेयवरे स्वशाटी-
प्रक्षाळनाय गतवत्यपवर्तनीगाः[1] ।
व्याख्यानकर्मणि तदागममीक्षमाणो
भक्तेषु वत्सलतया विललम्ब एषः ॥२१॥ इति ।

---

१. गङ्गाम् ।

तदसहमानाः परे शिष्याः पद्मपादप्रमुखाः 'मन्दमतेः कृते प्रतीक्षणमनावश्यकं' इति सूचयितुं गुरुपरिसरवर्तिभित्तिमपश्यन् । अवगततद्दुराशयो गुरुराजो गिरौ जातानुकम्पो मनसैव 'चतुर्दश विद्या अपि तस्मै प्रतिभान्तु' इति अनुजग्राह । तदनन्तरक्षणमेव, पश्यत्स्वेव सर्वेषु विनेयेषु निगमान्तसारभरितानि तोटकवृत्तानि कवयन्नेवायमाचार्यवर्यसन्निधिमाजगाम । उक्तं च–

भगवन्नुदधौ मृतिजन्मजले
सुखदुःखझषे पतितं व्यथितम् ।
कृपया शरणागतमुद्धर मा-
मनुशाध्युपसन्नमनन्यगतिम् ॥२२॥ इति ।

तानिच वृत्तानि श्रुतवन्तस्ते शान्तदुराशयाः 'क्षन्तव्योऽस्माकमेकोऽपराधः' इति गुरुवरचरणसरोजयोर्निपेतुः । ततो देशिकेश्वरस्तेषां विनीतिप्रमुखगुणानामावश्यकतामुपदिश्य तोटकवृत्तकवयितुस्तस्य तोटक इत्येव प्रख्यातिं जनयामास । उक्तं च–

तोटकाह्वयमवाप्य महर्षेः ख्यातिमाप स दिशासु तदादि ।
पद्मपादसदृशप्रतिभानान्मुख्यशिष्यपदवीमपि लेभे ॥२३॥

इति ॥

---

# ७. शारदास्थापनम् ।

यथाप्रतिज्ञं तिष्ठन्ति देवताः सत्वसंश्रयाः ।
आचार्याय प्रतिश्रुत्य वाणी तुङ्गाश्रयाऽभवत् ॥२४॥

इत्थं लोकानुग्रहनिरतो मस्करिप्रवरो यात्रामाचरन्नेव कर्णाटकजनपदविभूषायमाणं शृङ्गगिरिक्षेत्रमाजगाम। यच्च क्षेत्रं पश्यतामनवरतमपरिमितं हर्षपूरं जनयति । यच्चाधिवसन्जनस्त्रैलोक्यलक्ष्मीमपि तृणायापि न मनुते । येन चाभ्रंलिहैरनेकैरनोकहनिवहैर्निरन्तरं गगनं व्याप्रियते। यस्मै च स्पृहयन्ति शमदमादिसाधनसंपन्ना मनीषिणो महान्तः। यस्माच्च प्रस्थाय परमहंसाः अन्तेवासिनः स्वस्वधर्मरतास्तन्वन्ति। यस्य चोत्कर्षः श्रीरामावतारनिदानभूतपुत्रकामेष्टिप्रवर्तनेन दशरथाह्लादकस्य विभण्डकसुतस्य तपश्चर्यया प्रख्यातिमयते। यस्मिंश्चाहिनकुलगोव्याघ्रकाकोलूकप्रमुखाः प्राणिवर्गाः परित्यक्तवैराः प्रवर्धमानपरस्परप्रेमभराः अकुतोभया अटन्ति। तच्च नयनासेचनकं क्षेत्रमालक्ष्य प्रसन्नाशयो यमिराजः लोकहिताय सरसवाणीं श्रीशारदापीठनाम्ना स्थापयामास । तदा पद्मपादः गुरुणानुमतः श्रीरामेश्वरं प्रययौ ।

---

१. तत्र तु तुङ्गभद्रा तुङ्गा भद्रा इति द्विधा प्रवाहमयते ।

२. मण्डनमिश्रजयानंतरं परकायप्रवेशं कृत्वा सरसवाणीं विजित्य शारदास्थितिः कृतेति शङ्करदिग्विजये प्रोक्तम् ॥
तस्मादस्मत्कल्पितेष्वचर्यमाना स्थानेषु त्वं शारदाख्या दिशन्ती ।
इष्टानर्थान्नृष्यशृङ्गादिकेषु क्षेत्रेष्वास्स्व प्राप्तसत्संनिधाना ॥ इति ।

## ८. मातुः वैकुण्ठप्रापणम् ।

आत्मज्ञानी साधयति प्रतिज्ञातं निजाशयम् ।
मातरं प्रापयामास वैकुण्ठं देशिकोत्तमः ॥२५॥

एतदन्तरे संनिहितान्त्यकाला गुरुराजजननी पुत्रं सस्मार। तदनुक्षणमेवाचार्यवर्यो यथाप्रतिज्ञं योगमार्गेण कालटीमागत्य मातुर्मोक्षाय निर्गुणब्रह्मावबोधकं तत्त्वबोधनामकं प्रकरणं प्रोवाच । तत्तु मरणव्यथाकुलितधियः तस्याः चित्ते नारुरोह । तदा गुरुनाथः—

श्रियाश्लिष्टो विष्णुः स्थिरचरगुरुर्वेदविषयो
धियां साक्षी शुद्धो हरिरसुरहंताऽब्जनयनः ।
गदी शृङ्गी चक्री विमलवनमाली स्थिररुचिः
शरण्यो लोकेशस्तव भवतु कृष्णोऽक्षिविषयः ॥२६॥

इत्यादिकेन कृष्णषट्केन श्रीकृष्णो मातुर्नयनगोचरो भवतु इति तुष्टाव । तदा कमनीयगात्रो लक्ष्मीकळत्रः तामरसनेत्रो वसुदेवपुत्रः पुरतः प्रत्यक्षीभूय तां विमानमारोप्य वैकुण्ठं प्रापयामास । अथाचार्योऽपि पुत्रान्तरविहीनायास्तस्याः शवस्य यथावत्कृत्यमारेभे । तदा तद्ग्रामीणा जनाः संघीभूय 'नार्हति यतिरयं कृत्यमाचरितुम्' इति कलहमाकलयन्तो दहनायाग्निमपि न ददुः । अथ गुरुनाथः गृहोपकण्ठ एव शुष्काणि काष्ठानि संचित्य मातृदक्षिणपाणिमथनजातजातवेदसा तां ददाह ॥ तदा,

आस्तां तावदियं प्रसूतिसमये दुर्वारशूलव्यथा
नैरुच्ये तनुशोषणं मलमयी शय्या च सांवत्सरी ।
एकस्यापि न गर्भभारभरणक्लेशस्य यस्याः क्षमो
दातुं निष्कृतिमुन्नतोऽपि तनयस्तस्यै जनन्यै नमः ॥

इत्यादिकं मातृपञ्चकमभाणीत्—

मातुरर्थेऽन्तरायकारिणो जना यतीन्द्रेण शप्ता इति माधवीयशङ्करविजये दृश्यते । तथा हि—

न याचिता वह्निमदुर्यदस्मै शशाप तान्स्वीयजनान्सरोषः ।
इतः परं वेदबहिष्कृतास्ते द्विजा यतीनां न भवेच्च भिक्षा ॥२८॥

गृहोपकण्ठेषु च वः श्मशानमद्यप्रभृत्यस्त्विति ताञ्छशाप ।
अद्यापि तद्देशभवा न वेदमधीयते नो यमिनां च भिक्षा ॥२९॥

तदाप्रभृत्येव गृहोपकण्ठेष्वासीत् श्मशानं किल हन्त तेषाम् ।
महत्सु धीपूर्वकृतापराधो भवेत्पुनः कस्य सुखाय लोके ॥३०॥

इति । अथ च यतिराजः और्ध्वदैहिकं सर्वमपि निर्वर्त्य यथापूर्वं देशयात्रायै प्रतस्थे ॥

---

## ९. पञ्चपादिका ।

---

श्रुतैकधारो विबुधः सद्ग्रन्थान्धारयत्यहो ।
सकृच्छ्रुतधरोऽवादीद्देशिकः पञ्चपादिकाम् ॥३१॥

यदा जगद्गुरुः कालट्याः प्रतस्थे तदा निर्वृत्तसेतुयात्रः पद्मपादः क्रमेण क्षेत्राण्यटन् गुरुमर्णि मार्गयमाणो मध्येपथं गुरुनाथमद्राक्षीत् । तदा तीर्थकराधिराजो गुरुपुङ्गवः तं केनापि कारणेन दूयमानमानसमालक्ष्य, 'पद्मपाद ! कुतस्तवाननं गतशोभमास्ते' इति पप्रच्छ । तदा पद्मपादः 'भगवन् ! सेतुयात्रायाः पूर्वं जम्बुकेश्वरे मातुलसदने मया ग्रथितं शारीरकभाष्यव्याख्यानं निक्षिप्य, यात्रां समाप्य पुनरागत्य मातुलं पुस्तकमपृच्छम् । निगमान्तप्रद्वेषी स तु, केनापि मिषेण गेहं दाहयित्वा ग्रंथोऽपि दग्ध इति प्रत्युदैरयत् । अतोऽहं निरवधिमाधिमनुभवामि'इति प्रतिबभाषे । देशिकराजस्तु,'मा विषीद संपदापदोः साम्येन वर्तनमेव विदुषां भूषणं भवति । पूर्वं मन्निकटे यावत्त्वया पठितं, तावद्ब्रूमि तल्लिख' इति समादिदेश । सोऽपि तथैवाचार्यवर्यप्रोक्तं पञ्चानां पादानां व्याख्यानं तालपत्रे लिलेख । अत इदानीमपि पञ्चपादिका इति स ग्रन्थः प्रथते । तदा नष्टधनलाभेन गृहीव गुर्वनुग्रहप्राप्त स्वग्रंथस्य तावदंशेनापि परितुष्टस्स यथापुरं गुरुराजमेवानुससार । उक्तं च—

पूर्वं शृङ्गक्ष्माधरे मत्समीपे प्रेम्णा यासौ वाचिता पञ्चपादी ।
सा मे चित्तान्नापयात्यद्य शोको याताच्छीघ्रं तं लिखेत्यादिदेश ॥

इति । एवमेव राजशेखराख्यः कश्चन केरलभूपालः परमाचार्याय पूर्वनिवेदितां नाटकत्रयीं पावकदग्धां पुनरपि गुरुनाथकथितां विलिख्य हृष्टान्तरङ्गो बभूव ॥

---

# १०. क्रकचनाशः ।

अभिचारप्रयोगो हि महत्सु विफलायते ।
परं तु बाधते तस्य प्रयोक्तारं दुराशयम् ॥३३॥

इत्थमटति बहून्देशान्गुरुराजे, चतुःसहस्रं शिष्यास्तमनुजग्मुः । सुधन्वादयश्चक्रवर्तिनोऽपि छत्रचामरादिविरुदावलीर्वहन्तोऽष्टादशवाद्यैरष्टावपि काष्ठा बधिरयन्तो जगद्गुरोः कैङ्कर्यमकुर्वन् । इत्थं कर्णाटकमटति यतिनाथे तं वादैर्जेतुमशक्नुवन्क्रकचो नाम भैरवः मन्त्रशक्त्या गुरुं हन्तुं कापालिक देवतां प्राहिणोत् । अभिचारसमुत्पन्ना सा च देवता साट्टहासं मस्करिप्रवरमासाद्य स्वाभिन्नमेव तमभिज्ञाय, 'अहो मूढोऽयं क्रकचो मामात्मज्ञानिवधाय प्रहिणोति, अतस्तमेव हन्मि' इति संकुपिता परावृत्य तमेव कृतान्तस्यातिथीचकार । इत्थमेव बहवो गुरुद्रोहिणः क्रकचपदवीमनुजग्मुः । तत्र च यमिराजो बहूनि दुर्मतानि सुरेश्वरप्रमुखैर्विनेयैर्विनाश्य क्रमेण कामरूपादिदेशेष्वपि संचरन्नगस्त्याचरितां दिशमभिप्रतस्थे । एवं यात्रानिरतो गुरुनाथो मधुरामेत्य मीनाक्षीसुन्दरेश्वरावासेव्य सेतौ पर्वतवर्धनीसनाथं रामनाथमाराध । अथ वृषाचले सुन्दरराजमासेव्य जम्बुनाथक्षेत्रमाससाद ॥

---

१. अभिनवगुप्तनामा शाक्तः परमाचार्यायाभिचारिकं भगन्दरारूयं रोगं प्रेरयामास । अथ गुरुनाथस्तुतः प्रथमाभिषक् परमेश्वरः तेनैव रोगेण तमेव नाशयामास ॥

## ११. ताटङ्कादिप्रतिष्ठा ।

देवतानां कला उग्राः शमयित्वा गुरूत्तमः ।
धनाकर्षणमुख्यानि यन्त्राण्यस्थापयद्भुवि ॥३४॥

तस्मिन् हि कालेऽचलायां पापमर्त्यैर्दुर्दैवतपूजा च बहुत्र बहुलीबभूव। उत्तमदेवतासन्निधानेऽपि उग्राः कला अवर्धन्त। ताः सोढ्वा देवता अराधयितुं जना नाशक्नुवन्। तेषु प्रधानभूतं जम्बुकेश्वरं क्षेत्रम्। तत्रात्युग्रामखिलाण्डेश्वरीं शमयितुमाचार्यपुङ्गवस्तत्सन्निधौ महागणपतिं प्रतिष्ठापयामास। तदा सा देवी स्वपुत्रसंदर्शनेन मुदिता उग्राः स्वाः कलाः संचुकोच। तदुत्तरक्षण एवाम्बाभिमुखमागत्य गुरुराजस्ताः कलास्ताटङ्कयोः प्रतिष्ठाप्य ताभ्यामम्बायाः कर्णौ भूषयामास। अतो देवी ताटङ्कयुग्मेऽद्यापि सन्निधत्ते। विना ताटङ्काभ्यां देव्यै पूजापि नाचर्यते। यदा कदा वा तयोर्जीर्णोद्धारणप्रसक्तौ संभवन्त्यां तादृशाचार्यपरंपरामासेदिवांसः श्रीकामकोटिपीठाधिपतयो जगद्गुरवस्तेभूषणे नवीकृत्य ताभ्यां परदेवताश्रवसी भूषयन्ति। एवमटनकाले मूकाम्बिकाक्षेत्रेऽप्याचार्यमणिर्यन्त्रं स्थापयामास। अथ वेङ्कटाचलक्षेत्रे धनाकर्षणयन्त्रं स्थापयित्वा तिरुवोट्रियूर (त्यागराजक्षेत्रे) क्षेत्रेऽत्युग्रां त्रिपुरसुन्दरीं शमयित्वा तत्र वनदुर्गाभिधामुग्रदेवतां मन्त्रशक्त्या बद्ध्वा कूपे प्रवेशयामास। तत्र तस्याः प्रतिवर्षमेकां पूजां कारयामास। तत्राधुनापि गुरुस्थानानि राजन्ते। श्रीचिदम्बरे च चिदम्बर-

यन्त्रोद्धारणेन समं मोक्षलिङ्गं स्थापयामास । एवं लोकहित-माचरन्नाचार्यराजः काञ्चीमाप । उक्तं च केरळीयशङ्करविजये ।

सर्वज्ञः शिष्यसंयुक्तः शङ्करो देशिकोत्तमः ।
भूमिं प्रदक्षिणीकृत्य भूयः काञ्चीमुपागतः ॥३५॥ इति ।

शङ्कराभ्युदये च श्रीकाञ्चीदर्शनमुपवर्ण्यते ।

स मस्करी काञ्चिपुरीं गरीयसीमथ क्षितेरद्भुतकाञ्चिमैक्षत ।
असावशेषश्रुतिनीविरादरात्पुराररिराराधयते चिराय याम् ॥
इति ।

## १२. श्रीकाञ्च्यां मूलाम्नायप्रतिष्ठा ।

यथा शरीरे मुख्यं हि नाभीमूलं तथा भुवः ।
काञ्चीति गुरुणा तत्र मूलाम्नायः प्रतिष्ठितः ॥३७॥

श्रीकाञ्चीपुरी हि विश्वम्भराया मेखलास्थानमापन्ना मोक्षपुरीष्वेका च प्रकाशते । मोक्षपुर्यश्च—

अयोध्या मधुरा माया काशी काञ्ची ह्यवन्तिका ।
पुरी द्वारवतीचैव सप्तैता मोक्षदायिकाः ॥३८॥

इति वचनेन सप्तेति निर्णीयन्ते । तासु परशक्तिपीठानि विलसन्ति । परशक्तेः स्वरूपं सौन्दर्यलहर्यां निरूप्यते ।

गिरामाहुर्देवीं द्रुहिणगृहिणीमागमविदः
हरेः पत्नीं पद्मां हरसहचरीमद्रितनयाम् ।
तुरीया कापि त्वं निरधिगमनिस्सीममहिमा
महामाया विश्वं भ्रमयसि परब्रह्ममहिषी ॥३९॥

इति। अयोध्यादिस्थितपीठानि पृथिव्यप्तेजोवाय्वाका-शकालदिग्रूपाणि कथ्यन्ते। अस्मिन्क्रमे श्रीकाञ्ची गगनपीठ-परिशोभमाना बिलाकाशरूपिण्याः परदेवतायाः सान्निध्येन परमोत्कृष्टा नाभीविलरूपिण्याः कामाक्ष्याः मेखलास्थानमापन्ना इति च शास्त्राणि बोधयन्ति। शरीरात्मकक्षेत्रस्यापि नाभीविलमेव मध्यस्थानं जीवाधारभूतं च चकास्ति। अतश्चात्मज्ञानपीठानां मूलाम्नायतया, मध्यमाम्नायतया च यथा गुरुनिदेशं गुरुवरः स्वस्य स्थानं कल्पयामास॥

---

## १३. श्रीकामकोटिः।

---

श्रीकामकोटिः सर्वेषामालयानां पुरोमुखा।
प्रदक्षिणं प्रकुर्वन्ति तस्यै सर्वाश्च देवताः॥४०॥

तदानीं चोळेषु श्रीकाञ्चीमधिवसन्गुरुभक्तशिखामणिः राजसेनमहाराजो देशिकेन्द्रनिदेशेन श्रीकाञ्चीं विचित्रवीथी-परिष्काररमणीयां विधाय श्रीकामाक्ष्या एकाम्रनाथस्य श्री-वरदराजस्य देवतान्तराणां चायतनानि नवीचकार। अथचाचार्यराजः श्रीकाञ्चीं श्रीचक्राख्ययन्त्ररूपिणीं प्रतिष्ठाप्य इतरा देवतामूर्तीश्च स्थापयित्वा मध्यमे बिन्दुस्थाने श्रीकामकोटिं प्रकाशयामास। उक्तं च श्रीमच्छङ्करदिग्विजये–

सुरधाम स तत्र कारयित्वा परविद्याचरणानुसारि चित्रम्।
अपवार्य च तान्त्रिकानतानीद्भगवत्याः श्रुतिसंमतां सपर्याम्॥

अद्यापि तदभिमुखीभूता देवतामूर्तयः प्रत्युत्सवं श्री-कामकोटेः प्रदक्षिणं कुर्वन्ति । श्रीरामानुजसंप्रदायमनुसृत्य पांचरात्रविधानेनाराध्यमानस्य श्रीवरदराजस्य सन्निधानं श्री-कामकोटेः प्रतीच्यां दिशि क्रोशदूरे विराजते। महोत्सवेषु च श्रीवरदः शिवकाञ्चीमासाद्य श्रीकामकोटेः प्रदक्षिणमारचय्य श्रीजगद्गुरुमठस्य पुरोवभासमानं चोळराजमण्टपमलङ्करोति ।

किञ्च गुरुराजः इतरासां दुर्देवतानां कला अपि शम-यित्वा बिलरूपिणीं जगज्जननीं चक्रराजे कामकोटियन्त्रे आ-विर्भावयामास । किञ्च भरतखण्डे प्रतिस्थलमपि प्रस्थाया-नुग्रहीतुं मेरुप्रस्ताररूपकामकोटिं प्रतिष्ठाप्यात्मपूजायै जग्राह । तत्र काञ्च्यां सचामररमावाणी सव्यदक्षिण सेव्यमानं सर्व-ज्ञपीठं तावदवधि केऽपि नारुरुहुः। तथापि श्रीपरदेवताज्ञया-चार्यराजस्तदारोहणायायतिष्ट । तदा राजसेनादिमहीपालाः सर्वत्र वृत्तान्तमिमं प्रख्यापयन्ति स्म । तदाकर्ण्य जितपूर्वा अपि विमतस्थाः तदारोहणमसहमानाः प्रतिषेद्धुं मिळन्ति स्म। तदानीं श्रीसरस्वती 'भगवन्! ब्रह्मचर्यादवाप्तपारिव्राज्यो वा-त्स्यायनोपज्ञं कामशास्त्रमजानानो भवान्सर्वज्ञपीठमारोढुं ना-र्हति' इति गगनगिरा प्रत्यषेधत्। अथाचार्यपुङ्गवः 'भगवति! षण्मासैरवगतकामशास्त्रस्त्वां जेष्यामि । अतोऽनुमतिं देहि' इति प्रत्यभाषत। सापि 'तथैव भवतु' इति गगनगिरा प्रत्यु-दीरयामास । अथाचार्यराजः सशिष्यो मध्यदेशं जगाम ॥

---

## १४. परकायप्रवेशः ।

संसाधयति योगीष्टं परकायप्रवेशतः ।
जिगाय वाणीमाचार्योऽमरुकस्याङ्गमाविशन् ॥४२॥

एवमाचार्याधिराजो मध्यदेशमागत्य एवमालुलोचे । 'परकायप्रवेशेनाभीष्टसाधने शास्त्रोल्लङ्घनजन्यो दोषो भवितुं नेष्टे । यतस्तत्तच्छरीरावलम्बिनो वर्णाश्रमधर्माः' इति । एवमालोच्य संयमीन्द्रः सनन्दनमभिवीक्ष्येत्थं व्याजहार—

सौन्दर्यसौभाग्यनिकेतसीमाः पर:शता यस्य सरोरुहाक्ष्यः ।
स एष राजामरुकाभिधानः शेते गतासुः श्रमतो धरण्याम् ॥

प्रविश्य कायं तमिमं परासोर्नृपस्य राज्येऽस्य सुतं निवेश्य ।
योगानुभावात्पुनरप्युपैतुमुत्कण्ठते मानसमस्मदीयम् ॥४४॥

इति। अथ चाखेटवशादटव्यां तरुमूले परासोरमरुकस्य कायं प्रविशन्नहमहोविलगुहायां शरीरं त्यक्ष्यामि । तच्चाप्रमादेन रक्षणीयम् । प्राप्ते चावसरेऽमरुककायप्रविष्टोऽहं प्रबोधनीयः' इति चादिश्य सद्यो गतासो स्तस्यामरुकस्याङ्गमाविवेश । अथ च परिसरमागता महिष्यः किञ्चिदिव जातोच्छ्वासं महाराजमालक्ष्य विगतदुःखा जातहर्षा यावदालोकयन्ति तावत्प्रसन्नमुखस्स किमपि वक्तुकाम इवाभिनयति स्म । 'दिष्ट्या जीवति महाराजः' इति सर्वत्रोदन्ते प्रसृते सर्वा अपि सामात्याः प्रकृतयो

मुमुदिरे । इत्थं पञ्चषेषु दिवसेषु क्रमेण स्वास्थ्यमभिनयन्गुरुनाथो निखिलानाह्लादयन् राज्यमनुशशास ॥

तदा समुचिते काले पर्जन्यो ववर्ष । प्रजाश्च स्वस्वधर्मनिरता नीरोगा निरुपद्रवा धनाढ्या दीर्घायुषः बहुलभोग्या भगवद्भक्ताश्चासन् । महिष्यश्च तेनोपभुज्यमाना अन्यादृशीं तस्य कामकलानैपुणीमालक्ष्य 'नायमस्माभिरूढः पुरुषः, परंतु कार्यापेक्षया योगबलावलम्बी कश्चन महानुभावः। सिद्धे च कार्ये वपुरिदमुज्झित्वा निर्गच्छेत् । अतो यथा वपुरिदं स न जह्यात् तथा कार्यम् 'इति निश्चित्य राजपुरुषैर्मृतशरीराणि दाहयामासुः। आचार्यराजस्तु षाण्मासिकावधिं प्रतीक्षमाण आस । एतदन्तरेऽद्रोविलगुहास्थं शिष्यपरिपालितं गुरुराजशरीरमपि राजपुरुषाः प्रसह्य प्रगृह्य दग्धुं प्राक्रमन्त । तदा तेषु शिष्येषु केचन भिक्षुकरूपिणोऽन्तः प्रविश्य महिषीकरकमलदीयमानताम्बूलं करसरोरुहेणादाय मुखारविन्दे प्रक्षिपन्तं महापुरुषमवलोक्य एवमुदीरयामासुः ॥

नेति नेत्यादि निगमवचनेन
निपुणं निषिध्य मूर्तामूर्तराशिम् ।
यदशक्यनिह्नवं स्वात्मरूपतया
जानन्ति कोविदास्तत्त्वमसितत्त्वम् ॥४५॥

इति । इत्थं जगन्मिथ्या, नेदं वास्तवं स्वरूपं इत्यर्थावेदकैः बहुभिर्गीतैस्तं ते प्राबोधयन् । अथ विदितवृत्तान्तो गुरुनाथोऽमरुककायमुज्झित्वा दह्यमानं स्वदेहमाविश्य यावदुत्था-

तुमक्षमो बभूव। तावत्पद्मपादप्रमुखाः शिष्याः प्रवहदश्रुधारा आसन् ॥

तदा परमाचार्यः,

श्रीमत्पयोनिधिनिकेतन चक्रपाणे
भोगीन्द्रभोगमणिरञ्जितपुण्यमूर्ते।
योगीश शाश्वत शरण्य भवाब्धिपोत
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥४६॥

इत्यादिकैः पद्यैः नरकेसरिणं तुष्टाव । ततो नरसिंहः प्रत्यक्षीभूयामृतेनाचार्यवपुरासिच्य यथापूर्वं तेजोमयं वपुरुत्पाद्य करतले सालग्राममेकं प्रदायान्तरधात् । अधुनाप्याचार्यपीठस्थास्तं पूजयन्ति। अथ नृसिंहानुगृहीतो गुरुपुङ्गवः शिष्यैः समं श्रीकाञ्चीमाससाद। तदा सरस्वती 'गुरुनाथ! विजितास्मि भवतावगतकामशास्त्रेण। अतोऽर्हति भवान् सर्वज्ञपीठमारोढुमिति प्रशशंस ॥

## १५. बिरुदावल्यभ्युपगमः, लिङ्गपीठादिव्यवस्था च।

गृहीतबिरुदो लिङ्गपीठादीनां प्रवर्तकः।
गुरुनाथो विजयते मोक्षमार्गप्रदर्शकः ॥४७॥

ततस्तया सरस्वत्याऽभ्यर्थितो भिक्षुराजः सरस्वतीति बिरुदमङ्गीचकार। किञ्च कदाचित् सुरेश्वरस्य शिरसि स-

मुद्गतं स्फोटं चिकित्सितुमाचार्यराजेनाहूतौ नासत्यौ गुरुभक्तिपरवशतया महेन्द्रमनापृच्छ्य सहसा भुवमागत्याचिकित्सेताम् । तेन संजातमन्युना शतमन्युना साग्रहं प्रक्षिप्तं तदायुधं गुरुराजसंनिधाने निःसारमपतत् । पुरन्दरस्य पाणिश्च तस्तम्भे । ततो विनीतेन तेन प्रार्थितो मस्करीन्द्रस्तस्य मन्तुं क्षमित्वा तत्तोषाय तदीयमिंद्रपदमपि स्वीचकार। इदं च वासनादेहस्तुतौ निरूपितम् ॥

योे वै मण्डनमिश्रविद्वदधिपस्यापाद्य संन्यासितां
तन्मूर्ध्नि व्यसनापनोदनविधावाकर्षयन्नश्विनौ ।
भैषज्यं कलयाम्बभूव कुपितस्येन्द्रस्य वज्रायुधं
चूर्णीकृत्य पुनर्ददे हरिपदे चक्रे तमेनं भजे ॥४८॥

एवं स्वावतारकर्तव्यानि निर्वर्तयन्मस्करिप्रवरः श्रीकैलासादानीतेषु योगमोक्षमुक्तिवरभोगाख्येषु पञ्चसु लिङ्गेषु योगलिङ्गमात्मपूजायै जग्राह । अवशिष्टानि तु क्रमेण श्रीचि-

---

१. श्रीकाञ्चीकामकोटिपीठस्थेषु अष्टचत्वारिंशैः चिद्विलासापरनामधेयैः अद्वैतानन्दबोधेन्द्रैः विजितेन श्रीहर्षेण नैषधे योगलिङ्गमहिमा उपवर्णितः । तद्यथा—

सिंधोर्जैत्रमयं पवित्रमसृजत्तत्कीर्तिपूताद्भुतं
यत्र स्नान्ति जगन्ति सन्ति कवयः केवा न वाचंयमाः ।
यद्बिन्दुश्रियमिन्दुरञ्चति जलञ्चाविश्य दृश्येतरा
यस्यासौ जलदेवता स्फटिकभूर्जागर्ति योगेश्वरः ॥

दम्बर बदरिकाश्रम नेपाल शृङ्गगिरिषु प्रतिष्ठाप्य तत्र तत्र वेदान्तसिद्धान्तं स्थिरीचकार। किञ्च बदरिकायां ज्योतिःपीठं द्वारकायां कालिकापीठं जगन्नाथे विमलापीठं शृङ्गगिरौ शारदापीठं च स्थापयामास। अथ च–

अलिङ्गकमचक्रांकमजटास्थ्यसुरामिषम्।
अरक्तार्घ्यमनुच्छिष्टं मतमेतद्व्यवस्थितम्॥४९॥

इतिरीत्या, शैव, वैष्णव, कापालिक, शाक्त, सौर, गाणपताख्यमतानां षट्कं च प्रकाशयामास॥

---

## १६. सर्वज्ञपीठारोहणम्।

---

सर्वज्ञपीठमारुह्य सर्वज्ञमभिमान्य च।
अखण्डज्योतिरानन्दं भेजे देशिकशेखरः॥५०॥

तदा सहर्षाभिः प्रजाभिः परिष्कृता सा राजसेनमहाराजराजधानी श्रीकाञ्ची, कुत्रचिन्मौक्तिकसरैः अपरत्र कुसुममालाभिः अन्यत्र दुकूलकेतुभिः इतरत्र जाम्बूनदतोरणैः परत्र सुरभिसुरभिभिर्धूपैश्च अनितरसाधारणं कामनीयकमापादिता पश्यतां समेषामपि मानसमावर्जयामास। किञ्च सा चन्दनागरुसलिलार्द्ररथ्याचत्वरमार्गैः परिशोभमाना, पुष्पाक्षत-

फलांकुरलाजप्रदीपैः समर्च्यमाना पुष्पफलोपेतकदलीस्तम्भैः परिमण्डिता, रसालतरुपल्लवमालाभिः रमणीयतमा अष्टलक्ष्मीविलासानां निलयभूता सहृदयानां कां कामपि परमानन्दधारामावहति स्म ॥

तदानीं भिक्षुकाधिराजः करारविन्दकलितपूर्णकुम्भानां भूसुराणां वेदघोषेण समाप्याय्यमानहृदयः, मस्करिप्रवरपरिवृतपार्श्वप्रदेशः सूतमागधसंस्तूयमानापदानः प्रशान्तान्तरङ्गः, सुवर्णस्तम्भपरिमण्डितं विविधरत्नखचितं सर्वज्ञपीठमारोढुमुद्युक्तो बभूव ॥

तदा गुरुनाथोऽहमहमिकया प्रक्रान्तवादान्बहून् प्रतिवादिनोऽनायासेन जिगाय ॥

अथापि ताम्रपर्णीतीराभिजनं निशितधियं कञ्चन ब्राह्मणबालकं विनायासेन जेतुमसमर्थो बभूव । ताम्रपर्णीमहिमा श्रीनीलकण्ठदीक्षितैरेवमुपवर्णितः—

स्रोतोमुखैरम्बुनिधिं प्रविष्टं स्वभावतः स्वादु यदीयमम्भः ।
निर्मथ्य लब्धं त्रिदशैः कदाचिदास्वाद्यतेऽद्यापि सुधा सुधेति॥

क्षारोदकास्वादभवं विपाकमपाकरिष्यन्निव कुम्भजन्मा ।
जहाति शैलं मलयं न जातु पातुं प्रकृत्या मधुरं यदम्भः ॥९२॥

यां सर्वरत्नैकखनिं विहाय गङ्गामधात्केन गुणेन शंभुः ।
का प्रीतिरर्के सति कैतकेऽपि नहीश्वराः पर्यनुयोज्यशीलाः ॥

इत्यादिना । तदा तीर्थकराधिराजो गुरुराजः तादृश-ताम्रपर्णीतीर्थपाननिर्मलस्वान्तं तं सर्वज्ञमालक्ष्य, 'तेजसां हि न वयः समीक्ष्यते' इति प्रशस्य, बहूनां दिवसानामन्ते प्रयासेन तं विजित्य संन्यासिनं चकार । तदनु 'जय विजयी भव जगद्गुरो' इति भूपतिभिर्यतिपतिभिरन्तर्वाणिभिश्चाभिष्टुतो जगद्गुरुः सर्वज्ञपीठमारुरोह । अनन्तरं स्वेन विजितमपि महनीयमाहिमानं तं सर्वज्ञनाम्ना प्रथयित्वा तदनुगुणं सर्वज्ञपीठारोहणं च तस्य कारयामास ॥

तदानीमाचार्यपुङ्गवादवाप्तश्रीकामकोटिपीठोऽपि सुरेश्वराचार्यः गार्हस्थ्यादवाप्ततुरीयाश्रमतया गुरुनाथस्यात्मलिङ्गं पूजयितुमर्हो न बभूव । अतो ब्रह्मचर्यात्प्राप्ततुर्याश्रमः सर्वज्ञ एव तल्लिङ्गमर्चयन्सुरेश्वरानन्तरं श्रीकामकोटिपीठाधिपत्यं चावहत् । श्रीकाञ्चीस्थो मठस्तु श्रीशारदामठ इति व्यवह्रियते । उक्तं च —

निन्ये योगिसुरेश्वरोपचरितः श्रीकामकोट्याह्वये
लोकाचार्यपदे स्थितः स दिवसान्सर्वज्ञपीठे सुखम् ।
ख्यातस्तत्र तदादि तेन विजितां वाणीमनुस्मारयन्
श्रीमच्छङ्करदेशिकस्य जयति श्रीशारदाख्यो मठः ॥

अथ च सर्वज्ञः संक्षेपशारीरकं ग्रन्थरत्नमातन्वानः संक्षेपशारीरकाचार्यनाम्ना प्रख्यातिमभजत । द्वारकादिमठस्थास्तु सुरेश्वराचार्यः स्वस्वमठाधिपत्यमवहत् इति प्रथयन्ति ।

सुरेश्वराचार्यैः श्रीकाञ्च्यां पूर्वाश्रमनामानुगुण्येन मण्डनमिश्राग्रहार इति कञ्चनाग्रहारं कारयामास । एवमवतारप्रयोजनं सकलमपि समाकलय्य श्रीशङ्करभगवत्पादाः शरेक्षणाध्वनयने २६२५ रक्ताक्षिवृषभशुक्लैकादश्यां द्वात्रिंशत्संवत्सरपरिमिते स्वायुषि श्रीकाञ्च्यां देहं संत्यजन्तः अखण्डज्योतिरानन्दमक्षरं परमं पदं भेजिरे । अद्यापि गुरुराजमूर्तिः श्रीकाञ्च्यां मूर्तं चैतन्यमिव तिष्ठति ॥

द्वात्रिंशच्चरितैर्युता गुरुमणिप्राशस्त्यसंशोभिता
ब्रह्मानन्दरसोज्ज्वला गुरुकृपापाङ्गस्फुरद्भाषिता ।
सुब्रह्मण्यकृता कृतिः सुमनसां वाक्यप्रकर्षाङ्किता
भूयाद्वैदिकषण्मतप्रणयिनामानन्दसन्दायिनी ॥९९॥

---

उक्तं च पुण्यश्लोकमञ्जर्याम् —

महेशांशाज्जातो मधुरमुपदिष्टाद्वयनयो
महामोहध्वान्तप्रशमनरविः षण्मतगुरुः ।
फले ३२ स्वस्मिन्स्वायुष्यपि शरचराब्देऽपि २६२५ च कलेर्
विलिल्ये रक्ताक्षिण्यधिवृषसितैकादशि परे ॥ इति ।

प्राचीनशङ्करविजये च—

कल्यब्दैश्च शरेक्षणाध्वनयनैः २६२५ सत्कामकोटिप्रथे
पीठे न्यस्य सुरेश्वरं समवितुं सर्वज्ञसंज्ञं मुनिम् ।
कामाक्ष्याः सविधे स जातु निविशन्नुन्मुक्तलोकस्पृहो
देहं स्वं व्यपहाय देह्यसुगमं धाम प्रपेदे परम् ॥ इति ।

मोदन्ते मधुराक्षरा बुधवरा इत्यत्र नो विस्मयः
सारासारविवेकपाटववती येषां मनीषा स्वतः ।
कर्णारुन्तुदवाक्यजालकुतुका ये दोषमातन्वते
दोषज्ञा इव सत्कथासु कुजना आश्चर्यपात्रं हि ते ॥

श्रीमदप्पय्यवंश्येन वैद्यनाथतनूभुवा ।
सुब्रह्मण्यसमाख्येन गुरुपादाब्जसेविना ॥५७॥

श्रीकण्ठगर्भदासेन मुनिचक्षुःखपाण्डवे ५०२७ ।
अब्दे कलौ कृतं जीयाच्चरितं देशिकार्पितम् ॥५८॥

अम्लानमन्दारसुमोपमाभिरंतर्बहिश्च प्रसरद्रसाभिः ।
अमर्त्यवाग्भिर्ग्रथितं चरित्रमासूर्यचन्द्रं भुवने चकास्तु ॥

रुद्राक्षाढ्या गुणेन्दुप्रकटनविशदा छादितक्ष्वेडदोषा
भूतिश्रीभासमाना विबुधपरिषदा सेविता स्मेरवक्त्रा ।
पापौघध्वंसकर्त्री सकृदपि नमतां श्रीमतश्चन्द्रमौलेः
सुब्रह्मण्योक्तिगुम्भग्रथितगुरुकथास्रग्धरा मूर्तिरिन्धे ॥६०॥

॥ इति उत्तरो भागः ॥

---

॥ श्रीशङ्कराचार्यचरित्रं संपूर्णम् ॥

# READY FOR SALE.

| | | RS. | AS | PS |
|---|---|---|---|---|
| 1. | SUNITHI KUSUMA MALA<br>सुनीतिकुसुममाला<br>A Sanskrit rendering of the famous Thirukkural Stanzas. | 0 | 8 | 0 |
| 2. | THYANASLOKA SANGRAHA<br>ध्यानश्लोकसंग्रहः | 0 | 1 | 0 |
| 3. | DO (TAMIL) | 0 | 1 | 0 |
| 4. | NAVAPADYAMALA<br>नवपद्यमाला | 0 | 1 | 0 |
| 5. | GIRVANA BHASHA PRATHAMA PATAH<br>गीर्वाणभाषाप्रथमपाठः | 0 | 5 | 0 |
| 6. | UPANYASAMANJARI. In Tamil. | 0 | 4 | 0 |

**(1) K. V. Subrahmania Sastriar,**
**Sanskrit Pandit,**
**Madura College, MADURA.**

---

**(2) E. M. Gopalakrishna Kone,**
**Book-seller & Agent for**
**Government Publications,**
**Pudu Mandapam, MADURA.**